# Sanskrit Lesebuch

mit

## Benutzung handschriftlicher Quellen

herausgegeben

von

Karl Gustav

Albert Hoefer.

*Die II. Abth. wird einen kurzen Abriss der Grammatik, Anmerkungen und Wörterbuch nebst der Vorrede enthalten.*

**Berlin.**
W. Besser's Verlag.
**1849.**

## ॥ वाक्यमाला ॥

भास्करस्तीव्रं भासते ॥ बालः क्रीडति बालैः ॥ शार्दूलो मृगाणामधिपः प्रभुश्च कानने ऽस्मिन्नस्ति ॥ वराहो भुवं दृणाति ॥ मेघो भूमिं सिञ्चति ॥ अश्वो धावति ॥ जनः स्वपिति रात्रौ ॥ साधुस्त्यजति पापं ॥ साधुः पापं त्यजति ॥ भिक्षुरन्नं भिक्षते ॥ वायुर्गन्धं हरति ॥ वह्निः काननं दहति ॥ ध्वनिरपि मधुरो मया श्रुतः ॥ राजा जयति ॥ विषं सभा दरिद्रस्य ॥ योषिद्रत्नं दमयन्ती ॥ भर्ता परं नार्या भूषणं ॥ अस्ति माकन्दिका नाम नगरी जाह्नवीतटे ॥ इह कुमाराः क्रीडन्ति ॥ वयं पश्यामस्तपसा ॥ आवां क्रीडावः ॥ यूयं नृत्यथ ॥ युवां पठथः ॥ कासि कस्यासि किं वा मृगयसे वन इह ॥ का त्वं रोदिषि कस्माच्च ॥ न तथा सुखयत्यग्निर्न प्रवारा न कम्बलः शीतवातार्दितं लोकं यथा तव मरीचयः ॥

तत्ते ब्रवीमि ॥ तन्मे ब्रूहि ॥ तदर्हसि कर्तुं ॥

तच्छृणोति वाक्यं ॥ ग्रामं गच्छति ॥ विस्मयं परमं ययौ ब्राह्मणः ॥ देवता त्वं त्वां च वयं शरणं गताः ॥ गच्छैनामानयेह ममान्तिकं ॥ भक्त्याहमपि तं वीरं छायेवानुगता पथि ॥ राजानं सर्वं वृत्तान्तं ब्रूते चारः ॥ तमब्रवीत् कन्या वचनमर्थवत् ॥ स शिष्यस्तिष्ठति मासौ गुरुगृहे ॥ कियन्तं कालमवसन् पर्वते गन्धमादने ॥ राजन् पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ॥ सो ऽपृच्छल्लक्ष्मणं सीतां ॥ शिष्यान् धर्मं गुरुः शास्ति ॥ मातरं भिक्षेत भिक्षां ॥ दण्डं धर्मं विदुर्बुधाः ॥ नलस्य मामवगच्छध्वं भार्यां दमयन्तीति विख्यातां ॥ जित्वा राज्यं नलं नृपं निजगृहं गतः ॥ नलः कैश्चिद्देवनकुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ देवदत्तं धनं मुष्णाति धूर्तः ॥ वृक्षमवचिनोति फलानि बालः ॥ गां दोग्धि पयः ॥ दर्शयते कृष्णमर्जुनं | [अर्जुनेन] ॥ अति देवान् हरिः ॥ अनु पितरं गच्छति पुत्रः ॥ अधो ऽधः भूमिं पातालः ॥ उपर्युपरि पृथिवीं द्यौः ॥ प्रियामन्तरेण न सुखमस्ति लोकेषु ॥ ऋते त्वां मानुषीं मर्त्यं न पश्यामि वने ॥

राजपुत्रेण पुष्पग्रन्थनं कृतं ॥ अज्ञानता मया भ्राता वाणेन हतः ॥ सुखेन जीवति ॥ दुःखेन याति ॥ अद्य मे

निश्चयेन मरणं भविष्यति ॥ अध्यापनेन वर्तते ॥ न त्वया सदृशः कश्चित्त्रिषु लोकेषु विद्यते ॥ धर्मेण हीनाः पशुभिः समानाः ॥ परिदेवनेन किं फलं ॥ को नु मे जीवितेनार्थस्तमृते पुरुषर्षभं ॥ को ऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ॥ अलमतिविस्तरेण ॥ त्वया सह गमिष्यामि पञ्चत्वं ॥ जात्या ब्राह्मणः ॥ चक्षुषा काणः ॥ पादेन खञ्जः ॥ भर्ता नाम परं नार्या भूषणं भूषणैर्विना । एषा हि रहिता तेन शोभमाना न शोभते ॥ सुखं दुःखैर्विना न लभ्यते ॥ कतिपयदिवसैरतिक्रान्तैः पुनरपि धनञ्जयः श्वशुरगृहे समायातः ॥

पशुं शिवाय ददाति ॥ ब्राह्मणेभ्यो ददौ दानानि ॥ रामाय पूजां चक्रे महामुनिः ॥ स्वस्ति भवत्यै ॥ नमः पितृभ्यः ॥ नमस्करोति देवान् [देवेभ्यः] ॥ मुक्तये हरिं भजति साधुः ॥ भक्तिर्ज्ञानाय कल्पते ॥ वाताय कपिला विद्युत् ॥ ब्राह्मणाय हितो धर्मः ॥ हरये रोचते भक्तिः ॥ बालाय स्वदते मोदकः ॥ फलेभ्यो गच्छति वनं ॥ विप्राय गां प्रतिशृणोति राजा ॥ नालं सुखाय सुहृदो नालं दुःखाय शत्रवः ॥ न त्वां मन्ये तृणाय [तृणं] ॥

ग्रामादायाति गोपालस्य पुत्रः ॥ प्रासादादीक्षते ॥

*

आसनादुत्तिष्ठति ॥ धावतो ऽश्वात्पतति ॥ पापाद्विरमति साधुः ॥ भीतो रणे श्वेतवाहादिति मां मंस्यते जनः ॥ चौराद्बिभेति स्त्री ॥ चौरेभ्यस्त्रायते राजा ॥ यथा फलानां पक्वानां नान्यत्र पतनाद्भयं । एवं नरस्य जातस्य नान्यत्र मरणाद्भयं ॥ न धनं शूद्राद्विप्रो भिक्षेत ॥ अर्थेभ्यः क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ यवेभ्यो गावो वारयति गोपालः ॥ श्वशुराज्जिह्रेति ॥ उपाध्यायादधीते शिष्यः ॥ एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वं ॥ वनात्पुरं योजनं ॥ नगराद्बहिः ॥ वर्षात्प्रभृति ॥ ऋते पुरुषात् ॥ भैक्ष्यमेवाचरिष्यामः शरीरस्या विमोक्षणात् ॥ आ प्रलयकालाज्जगद्वर्तते ॥ अर्जुनाद्युधिष्ठिरो ज्यायान् ॥ इतरः कृष्णात् ॥ अन्यो हरेः ॥ कुसुमात्कोमलाङ्गना ॥ पाषाणात्कठिनं हृदयं ॥

अस्य जनस्य किंचिदस्ति प्रभुत्वं ॥ अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामायूंषि क्षयं ॥ तथा तेषां वसतां तस्मिन् राष्ट्रे महात्मनामतिचक्राम सुमहान् कालः ॥ सुसंरब्धो ऽपि रामाणां न कुर्यादप्रियं नरः ॥ पुष्कर त्वं मे भ्राता सञ्जीव शरदां शतं ॥ प्रजानां प्रभवति राजा ॥ प्रभवति निजस्य कन्याजनस्य महाराजः ॥ वैदर्भी विचरत्येका नलमन्वेषती च नाबिभ्यत् सा नृपसुता

कस्यचित् ॥ न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ॥ धनानामीशते यत्नाः ॥ दीनानां दयस्व ॥ कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ॥ नित्यशः स्मरामि त्वां प्रिये ॥ स भ्रातुर्दर्शयामास तौ करौ ॥ गवां सहस्रं दास्यामि यो वस्त्रावानयिष्यति ॥ राज्ञः पूजितो विप्रः ॥ पुरुषस्य रुजयत्यतिसारः ॥ पुरुषं रुजयति ज्वरः ॥ अर्जुनस्य नास्ति समो वीर्ये पृथिव्यामपि कश्चन ॥ को ऽन्यो ऽस्ति सदृशो मम ॥ चतुष्पदां गौः प्रवरा। लोहानां काञ्चनं वरं । अज्ञातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ॥

सरसीवामले ऽऽत्मानं द्वितीयं पश्य वै सुतं ॥ भूमौ तिष्ठति नरः ॥ वने चरति सिंहः ॥ कट आस्ते ब्राह्मणः ॥ कर्णौ कथयति ॥ विपदि धैर्यं प्रकृतिसिद्धं महात्मनां ॥ नगरं प्राविशद्दशमे ऽहनि ॥ अन्यस्मिन् दिने निशीथसमये श्मशानभूमौ रुदत्या नार्याः करुणाविलापशब्दं शृणोति स्म राजा ॥ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति हस्तिनं केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ॥ गतेषु देवेषु कलिरब्रवीत् ॥ तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥

हा हा राजन्निति मुहुरितश्चेतश्च धावति ॥ वि-

शोकं कुरु मां क्षिप्रमशोक प्रियदर्शन ॥ मा पिता रुद मा मातर्मा स्वसस्त्वित्यब्रवीद्बाल उत्फुल्लनयनः ॥ प्रसन्नो ऽसि यदि प्रभो रम्यां काञ्चित्कथां ब्रूहि देवातीव नवां मम ॥ मुहुरुत्पतते बाला मुहुः पतति विह्वला मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ यावद्भुङ्क्ते तावद्देहि ॥ वसन्तीह पुरा ब्राह्मणाः ॥ यो ऽन्नं ददाति स स्वर्गं याति ॥ नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनं ॥ न गच्छामि पुरा लङ्कामायुर्यावद्धाम्यहं ॥ ऋतुपर्णो वेदान्तनैपुणं ॥ अभिधावन्ति स्म पौराः ॥ मह्ले स्म हितमाचष्टे ॥ कस्मिंश्चिद्वनोद्देशे चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म ॥

महदपि परदुःखं शीतलं सम्यगाहुः ॥ सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् । हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिं । छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः । भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः । विलज्जमाना वस्त्रान्ते जग्राहायतलोचना । स्कन्धदेशे ऽसृजत्तस्य स्रजं । वरयामास चैवैनं पतित्वे । पार्थिवास्तु प्रतिजग्मुर्यथागतं । गतेषु पार्थिवेषु भीमो विवाहं कारयामास दमयन्त्या नलस्य च । उष्य तत्र यथाकामं

नैषधो भीमेन समनुज्ञातो जगाम नगरं स्वकं। तत्र रेमे सह पत्न्या। अतीव मुदितो राजारञ्जयत्प्रजाः। ईजे चाप्यश्वमेधेन। एवं स यजमानश्च ररक्ष वसुसम्पूर्णां वसुधां॥

यदि जानीथ नृपतिं क्षिप्रं शंसत मे प्रियं॥ यथा विशोका गच्छेयमशोक नग तत्कुरु। सत्यनामा भवाशोक अशोकः शोकनाशनः॥ सत्वरं त्रायस्व मां॥ छिन्धि मम बन्धनं॥ भीतामाश्वासय मां॥ विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः॥ नलस्य मां विद्धि [अवगच्छध्वं] भार्यां॥ एषो ऽग्निरुत्थितः कष्टस्त्रायध्वं धावताधुना॥ भासि विद्युदिवाभ्रेषु शंस मे कासि॥ कुरुष्व दयां मयि॥ ब्रूहि क्व यास्यसि॥ एहि दीव्य नलेन॥ शृणु मे वचः॥ यद्युपाध्याय आगच्छति त्वं वेदमधीष्व॥ यथाहं नैषधादन्यं मनसापि न चिन्तये तथायं पततां क्षुद्रः परासुः॥ श्रूयतामियं कथा॥ सिद्धिरस्तु शिवाः सन्तु तव पन्थानः॥

नलस्य यदि भार्या त्वं भवेथा वरवर्णिनि सफलं ते भवेज्जन्म॥ यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः। तस्य भूतस्य नो दुःखाद्दुःखमप्यधिकं भवेत्॥ न वारयेद्गां धयन्तीं न चाचक्षीत कस्यचित्। न द्वि-

न्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः ॥ ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥ दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ॥ परदुःखेन यो दुःखी न स जातु सुखी भवेत् ॥ हीनौ मया तौ बालौ विनश्येतां न सन्देहो मत्स्याविव जलक्षये ॥ पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयं दुःखाद्दुःखतरं प्राप्य म्रियेयं ॥

यद्येषा मम भार्या भवति तदा जीवामि । नो चेन्मरिष्यामि ॥ अहं रामो वा राजा लक्ष्मणो वा मरिष्यति ॥ मुनिं द्रष्टुं गमिष्यन्ति वनं ॥ मरिष्यामि विजेष्ये वा हताश्चेत्तनया मम ॥ पतिं द्रक्ष्यसि कल्याणि क्षिप्रं ॥ मृगयिष्यन्ति ते भर्तारं पुरुषा मम ॥ इह वसती भर्तारमुपलप्स्यसे ॥ संग्रामेषु राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ यावत्त्वां दुःखान्न विमोक्ष्यामि तावत्त्वत्समीपे निवत्स्यामि ॥ आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवं मातरः सह मैथिल्यास्तोष्टा च भरतः परं ॥ यो भिक्षां दाता स स्वर्गं याता ॥ उदर्कस्तव कल्याणो भविता ॥

सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् ॥ यदि स मया दृष्टोऽभविष्यत्ततोऽभोक्ष्यत ॥ चिरं जीव्याद्भवान् [जीवतु] ॥

पिता भार्यामनुव्रतां परित्यक्तुं नार्हति । पतिहीना
तु या नारी सा न शक्ष्यति जीवितुं ॥ नहि सा
क्षत्रियाशुचिना शक्या द्रष्टुं ॥ ऋषीणामपि का शक्तिः
स्रष्टुं रामामृते प्रजाः ॥ को हि वित्तं रहस्यं वा स्त्रीषु
शक्नोति गूहितुं ॥ यः सतां पथि खलान्नेतुं वाञ्छति । ५
व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते ॥ ह-
रिणीव च राजश्रीरियं विप्लविनी सदा । धैर्यपाशेन
बन्द्धुं च तामेव जानते बुधाः ॥ गतः पिता मे फ-
लान्याहर्तुमाश्रमात् ॥ मयाद्य शप्तो मृतस्त्वं कस्त्वां
रक्षितुमीश्वरः ॥ नायं कालो विलम्बितुमिह ॥ सिंहानां १०
निनदा दुःखाः श्रोतुं दुःखमतो वनं ॥ दुष्करं विषमौष-
धीकर्तुं ॥ स दोषः प्रयत्नेन न शक्यमतिवर्तितुं ॥
स्वविषये रक्षा कर्तव्या भूतिमिच्छता । यज्ञैर्ना-
वाप्यते स्वर्गो रक्षणात्प्राप्यते यथा ॥ अस्या रूपेण
सदृशी मानुषी न विद्यते ॥ अहं प्रजापतिर्ब्रह्मा मत्परं १५
नाधिगम्यते ॥

शत्रूनगमयत्स्वर्गं ॥ वेदानध्यापयद्द्विजं ॥ आशयद-
मृतं देवान् ॥ आह्वयत्सलिलं पृथ्वीं यः स मे श्रीह-
रिर्गतिः ॥ प्रीतोऽहं भोजयिष्यामि भवतीं भुवन-
त्रयं ॥ बालमग्राहयद्विद्यां ॥ आवय पारिषदान्नाटकं ॥

दर्शयाञ्चक्रिरे रामं सीतां ॥ प्रादिद्वन्त नो नृत्यं नाशुश्रूषत गायनान् ॥ आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुं । स गच्छत्यञ्जसा ब्रह्मणः सद्म शाश्वतं ॥ आ पुरुषैरभिह्नुतो रोरूयमाणो मातुः समीपमुपागच्छत् ॥ पक्षौ लोलूयाञ्चक्रे पतत्रिणः ॥ वाव्रज्यते खञ्जः ॥ जञ्जप्यते ब्राह्मणः ॥ निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ उष्णो दहति चाङ्गारः शीतः कृष्णायते करं ॥ मतिर्दोलायते नूनं सतामपि खलोक्तिभिः ॥

इन्द्रो राजा देवानां प्रधान इति नः श्रुतं ॥ नलस्य दृष्ट्वा वैदर्भीं देदीप्यमानां वपुषा श्रिया च ववृधे कामः । सत्यं चिकीर्षमाणस्तु धारयामास कृच्छ्रयं ॥ वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यं शतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ न शोच्यः स नरव्याघ्रो युधि निधनं गतः ॥ यथा भवितव्यं तथा भवतु ॥ कच्चित्त्वं दृष्टवानसि मे प्रियं पतिं ॥ प्रत्याख्याता मया स्वयंवरे नलस्यार्थाय देवताः । नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहं ॥ ततो बहुतिथे काले सुप्तामुत्सृज्य मां नलो वाससोऽर्द्धं परिछिद्य त्यक्तवान्मां ॥

॥ इति वाक्यमाला ॥

---

॥ अथ भारतीयश्लोकाः ॥

धिगिदं जीवितं लोके गतसारमनर्थकं ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥ १ ॥
जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य दुःखानामागमो ध्रुवः ॥ २ ॥
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परां गतिं ।
गन्तुं ब्रह्मन्सपुत्राणामिति धर्मविदो विदुः ॥ ३ ॥
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ ४ ॥
अर्द्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्या मूलं तु सन्ततेः ॥ ५ ॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरं ॥ ६ ॥
वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ ७ ॥
रक्षिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ८ ॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिंग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥ ९ ॥

ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदां ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ १० ॥
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ॥
पुत्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते ॥ ११ ॥
विरूपो यावदादर्शे नात्मनः पश्यते मुखं ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरं ॥ १२ ॥
यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते ।
तदान्तरं विजानीत आत्मानं चेतरं जनं ॥ १३ ॥
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥ १४ ॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ १५ ॥
अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान्हृष्टो भवति दुर्जनः ॥ १६ ॥
अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिं ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ १७ ॥
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरं ॥ १८ ॥
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परं ।
नहि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ १९ ॥

भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।
दैवं प्रज्ञाविशेषेण को निवर्तितुमर्हति ॥ २० ॥
विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥ २१ ॥
कालः सृजति भूतानि कालः संहरते प्रजाः ।
प्रजाः कालो निर्दहति कालः शमयते पुनः ॥ २२ ॥
कालो हि कुरुते भावान्सर्वाँल्लोके शुभाशुभान् ।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ॥ २३ ॥
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।
कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥ २४ ॥
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै सन्तापो नेह विद्यते ॥ २५ ॥
॥ इति भारतीयश्लोकाः ॥

---

॥ अथ गङ्गावतरणकथनं ॥
॥ लोमश उवाच ॥

इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ॥ १ ॥
स हैहयान्समुत्साद्य तालजङ्घांश्च भारत ।
वशे च कृत्वा राजन्यान्स्वराज्यमन्वशासत ॥ २ ॥

तस्य भार्ये बभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैव्या च भरतर्षभ ॥ ३ ॥
स पुत्रकामो नृपतिस्तताप सुमहत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ४ ॥
स तप्यमानः सुमहत्तपो योगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनं ॥ ५ ॥
शङ्करं भवमीशानं पिनाकिं शूलपाणिनं ।
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिं ॥ ६ ॥
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत ॥ ७ ॥
तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमं ।
यस्मिन्वृतो मुहूर्ते ऽहं त्वयेह नृपते वरं ॥ ८ ॥
षष्टिः पुत्रसहस्राणि शूराः परमदर्पिताः ।
एकस्यां सम्भविष्यन्ति पत्न्यां नरवरोत्तम ॥ ९ ॥
ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्यां सम्भविष्यति ॥ १० ॥
एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ।
स चापि सगरो राजा जगाम स्वं निवेशनं ॥ ११ ॥
पत्नीभ्यां सहितस्तत्र सो ऽतिहृष्टमनास्तदा ।
तस्य ते मनुजश्रेष्ठ भार्ये कमललोचने ॥ १२ ॥

वैदर्भी चैव शैव्या च गर्भिण्यौ सम्बभूवतुः ।
ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ॥ १३ ॥
शैव्या च सुषुवे पुत्रं कुमारं देवरूपिणं ।
तदालाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ॥ १४ ॥
अथान्तरीक्षाच्छुश्राव वाचं गम्भीरनिस्वनां ।
राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि ॥ १५ ॥
अलाबुमध्यान्निष्कृत्य वीजं यत्नेन गोप्यतां ।
स्वोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ॥ १६ ॥
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि भारत ।
महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ॥ १७ ॥
एतच्छ्रुत्वान्तरीक्षाच्च स राजा राजसत्तम ।
यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ ॥ १८ ॥
एकैकशस्ततः कृत्वा वीजं वीजं नराधिपः ।
घृतपूर्णेषु कुम्भेषु तान्भागान्विदधे ततः ॥ १९ ॥
धात्रीश्चैकैकशः प्रादात्पुत्ररक्षणतत्परः ।
ततः कालेन महता समुत्तस्थुर्महाबलाः ॥ २० ॥
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ॥ २१ ॥
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ।

बहुवाचावज्ञानन्तः सर्वांल्लोकान्सहामरान् ॥ २२ ॥
त्रिदशांश्चाप्यधावन्त तथा गन्धर्वराक्षसान् ।
सर्वाणि चैव भूतानि शूराः समरशालिनः ॥ २३ ॥
बाध्यमानास्ततो लोकाः सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ २४ ॥
तानुवाच महाभागः सर्वलोकपितामहः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्द्धं यथागतं ॥ २५ ॥
नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ २६ ॥
एवमुक्तास्तु ते देवा लोकाश्च मनुजेश्वर ।
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतं ॥ २७ ॥
ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ॥ २८ ॥
तस्याश्वो व्यचरद्भूमिं पुत्रैः स परिरक्षितः ।
समुद्रं स समासाद्य निस्तोयं भीमदर्शनं ॥ २९ ॥
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ।
ततस्ते सागरास्तात हृतं मत्वा हयोत्तमं ॥ ३० ॥
आगम्य पितुराचख्युरदृश्यं तुरगं हृतं ।
तेनोक्ता दिक्षु सर्वासु सर्वे मार्गत वाजिनं ॥ ३१ ॥
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयं ।

अमार्गन्त महाराज सर्वं च पृथिवीतलं ॥ ३२ ॥
ततस्ते सागराः सर्वे समुपेत्य परस्परं ।
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च ।
आगम्य पितरं चोचुस्ततः प्राञ्जलयो ऽग्रतः ॥ ३३ ॥
ससमुद्रवनद्वीपा सनदीनदकन्दरा ।
सपर्वतवनोद्देशा निखिलेन मही नृप । ३४ ।
अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥ ३५ ॥
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥ ३६ ॥
अनागमाय गच्छध्वं भूयो मार्गत वाजिनं ।
यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ ३७ ॥
प्रतिगृह्य तु सन्देशं पितुस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ ३८ ॥
अथापश्यन्त ते वीराः पृथिवीमवदारितां ।
समासाद्य बिलं तच्चाप्यखनन्सगरात्मजाः ।
कुद्दालैर्ह्रेषुकैश्चैव समुद्रं यत्नमास्थिताः ॥ ३९ ॥
स खन्यमानः सहितैः सागरैर्वरुणालयः ।
अगच्छत्परमामार्त्तिं दीर्यमाणः समन्ततः ॥ ४० ॥
असुरोरगरक्षांसि सत्वानि विविधानि च ।

आर्त्तनादमकुर्वन्त बध्यमानानि सागरैः ॥ ४१ ॥
छिन्नशीर्षा विदेहाश्च भिन्नत्वगस्थिसन्धयः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः ॥ ४२ ॥
एवं हि खनतां तेषां समुद्रं वरुणालयं ।
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत ॥ ४३ ॥
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः ॥ ४४ ॥
अपश्यन्त हयं तत्र विचरन्तं महीतले ।
कपिलं च महात्मानं तेजोराशिमनुत्तमं ॥ ४५ ॥
तेजसा दीप्यमानं तु ज्वालाभिरिव पावकं ।
तं ते दृष्ट्वा हयं राजन्सम्प्रहृष्टतनूरुहाः ॥ ४६ ॥
अनादृत्य महात्मानं कपिलं कालचोदिताः ।
संक्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः ॥ ४७ ॥
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ।
वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवाः ॥ ४८ ॥
स चक्षुर्विकृतं कृत्वा तेजस्तेषु समुत्सृजन् ।
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ॥ ४९ ॥
तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ।
सगरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत् ॥ ५० ॥
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतं ।

मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥ ५१ ॥
अंशुमन्तं समाहूय असमञ्जःसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ५२ ॥
षष्टिस्तानि सहस्राणि पुत्राणाममितौजसां ।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ५३ ॥
तव चापि पिता तात परित्यक्तो मयानघ ।
धर्मं स्वं रक्षमाणेन पौराणां हितमिच्छता ॥ ५४ ॥

॥ युधिष्ठिर उवाच ॥

किमर्थं राजशार्दूलः सगरः पुत्रमात्मजं ।
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ५५ ॥

॥ लोमश उवाच ॥

असमञ्जा इति ख्यातः सगरस्य सुतो ह्यभूत् ।
यं शैव्या जनयामास पौराणां स हि दारकान् ।
गलेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्बलान् ॥ ५६ ॥
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ॥ ५७ ॥
त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ।
असमञ्जोभयाद्घोरात्ततो नस्त्रातुमर्हसि ॥ ५८ ॥
पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥ ५९ ॥

असमञ्जाः पुरादद्य सुतो मे विप्रवास्यतां ।
यदि वो मत्प्रियं कार्यमेतच्छीघ्रं विधीयतां ॥ ६० ॥
एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान्नृपः ॥ ६१ ॥
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ ६२ ॥
अंशुमांस्तु महेष्वासो यदुक्तः सगरेण हि ।
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ ६३ ॥
॥ सगर उवाच ॥
पितुश्च ते ऽहं त्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाश्वस्य परितप्यामि पुत्रक ॥ ६४ ॥
तस्माद्दुःखाभिसन्तप्तं यज्ञविघ्नाच्च मोहितं ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ ६५ ॥
॥ लोमश उवाच ॥
अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात्तं देशं यत्र वै दारिता मही ॥ ६६ ॥
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तं ॥ ६७ ॥
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमं ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ ७८ ॥

ततः प्रीतो महाराज कपिलोऽंशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ॥ ६९ ॥
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयं वरकं वव्रे पितॄणां पावनेच्छया ॥ ७० ॥
तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ॥ ७१ ॥
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितं ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥ ७२ ॥
तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरं ॥ ७३ ॥
हयं नयस्व भद्रं ते यज्ञियं नरपुङ्गव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः ॥ ७४ ॥
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ ७५ ॥
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ।
मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ॥ ७६ ॥
यथादृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतं ॥ ७७ ॥
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।

अंशुमन्तं च सम्पूज्य समापयत तं क्रतुं ॥ ७८ ॥
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयं ॥ ७९ ॥
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ८० ॥
अंशुमानपि धर्मात्मा मही सागरमेखलां ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ८१ ॥
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ॥ ८२ ॥
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ८३ ॥
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलं ॥ ८४ ॥
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ८५ ॥
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ।
तपःसिद्धिसमायोगात्स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ८६ ॥
स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ ८७ ॥

स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ ८८ ॥
स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वर ॥ ८९ ॥
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः ।
सो ऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमं ॥ ९० ॥
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतं ।
पवनालम्बिभिर्मेघैः परिषिक्तं समन्ततः ॥ ९१ ॥
नदीकुञ्जनितम्बैश्च प्रासादैरुपशोभितं ।
गुहाकन्दरसंलीनसिंहव्याघ्रनिषेवितं ॥ ९२ ॥
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ९३ ॥
मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः ।
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ९४ ॥
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलं ।
सारसानां च मधुरैर्व्याहृतैः समलंकृतं ॥ ९५ ॥
किन्नरैरप्सरोभिश्च निषेवितशिलातलं ।
दिग्वारणविषाणाग्रैः समन्ताद्घृष्टपादपं ॥ ९६ ॥
विद्याधरानुचरितं नानारत्नसमाकुलं ।
विषोल्बणभुजङ्गैश्च दीप्तजिह्वैर्निषेवितं ॥ ९७ ॥

क्वचित्कनकसङ्काशं क्वचिद्रजतसन्निभं ।
क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् ॥ ९८ ॥
स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः ।
फलमूलाम्बुसम्भक्षः सहस्रं परिवत्सरान् ॥ ९९ ॥
संवत्सरसहस्रे तु गते दिव्ये महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयं ॥ १०० ॥

॥ गङ्गोवाच ॥

किमिच्छसि महाराज मत्तः किं च ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १०१ ॥

॥ लोमश उवाच ॥

एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे कपिलेन महानदि ।
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयं ॥ १०२ ॥
षष्टिस्तानि सहस्राणि सागराणां महात्मनां ।
कपिलं देवमासाद्य क्षणेन निधनं गताः ।
तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ॥ १०३ ॥
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि ।
तावत्तेषां गतिर्नास्ति सागराणां महानदि ॥ १०४ ॥
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ।
तेषामर्थेन याचामि त्वामहं वै महानदि ॥ १०५ ॥

एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ १०६ ॥
करिष्यामि महाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाद्भुवं ।१०७।
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ १०८ ॥
तं तोषय महाबाहो तपसा वरदं हरं ।
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ।
स करिष्यति ते कामं पितॄणां हितकाम्यया ॥ १०९ ॥
एतच्छ्रुत्वा ततो राजन्महाराजो भगीरथः ।
कैलासं पर्वतं गत्वा तोषयामास शङ्करं ।
तपस्तीव्रमुपागम्य कालयोगेन केनचित् ॥ ११० ॥
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप ।
स्वर्गे वासं समुद्दिश्य पितॄणां स नरोत्तमः ॥ १११ ॥
भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसां ।
एवमस्त्विति राजानं भगवान्प्रत्यभाषत ॥ ११२ ॥
धारयिष्ये महाबाहो गगनात्प्रच्युतां शिवां ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ ११३ ॥
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ११४ ॥

तत्र स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।
प्रयाचस्व महाबाहो शैलराजसुतां नदीं ।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ११५ ॥
एतच्छ्रुत्वा वचो राज्ञा शर्वेण समुदाहृतं ।
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् ॥ ११६ ॥
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ॥ ११७ ॥
तां प्रच्युतामथो दृष्ट्वा देवाः सार्द्धं महर्षिभिः ।
गन्धर्वोरगयक्षाश्च समाजग्मुर्दिदृक्षवः ॥ ११८ ॥
ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्धतमहावर्ता मीनग्राहसमाकुला ॥ ११९ ॥
तां दधार हरो राजन्गङ्गां गगनमेखलां ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ १२० ॥
सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ १२१ ॥
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित् ।
सा फेनपटसंवीता मत्तेव प्रमदाव्रजत् ।
क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमं ॥ १२२ ।
एवं प्रकारान्सुबहून्कुर्वन्ती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १२३ ॥

दर्शयस्व महाराज मार्गं केन व्रजाम्यहं ।
त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ १२४ ॥
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनां ॥ १२५ ॥
प्लावनार्थं नरश्रेष्ठ पुण्येन सलिलेन च ।
गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह ।१२६।
समासाद्य समुद्रं च गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयं ।१२७।
दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् ।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ १२८ ॥
॥ इति श्रीमहाभारते आरण्यपर्वणि गङ्गावतरणकथनं ॥

---

॥ अथ पौष्योपाख्यानं ॥

॥ सौतिरुवाच ॥

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते स्म । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वागच्छत्सारमेयः । स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् । तं माता रोरूयमाणमुवाच । किं रो-५

दिषि केनास्यभिहत इति । स एवमुक्तो मातरं प्रत्युवाच । जनमेजयस्य भ्रातृभिरभिहतो ऽस्मीति । तं माता प्रत्युवाच । व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति । स तां पुनरुवाच । नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिहे इति । तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते । स तया क्रुद्धया तत्रोक्तः । अयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति । न किञ्चिदुक्तवन्तस्ते । सा तानुवाच । यस्मादयमभिहतो ऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया दृढं सम्भ्रान्तो विषण्णश्चासीत् । स तस्मिन्सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् । यो मे पापकृत्यां शमयेदिति । स कदाचिन्मृगयां गतः पारिक्षितो जनमेजयः कस्मिंश्चित्स्वविषय आश्रममपश्यत् । तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम । तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच । भगवन्नयं तव पुत्रो मम पुरोहितो ऽस्त्विति । स

एवमुक्तः प्रत्युवाच जनमेजयं । भो जनमेजय पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्यसम्भृतो मच्छुक्रपीतवत्यास्तस्याः कुक्षौ संवृद्धः । समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्यां । अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कश्चिदर्थमभियाचेत्तं तस्मै दद्यादयं । यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच । भगवंस्तत्तथा भविष्यतीति । स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच । मयायं वृत उपाध्यायः । यदयं ब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति । तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे । तं च देशं वशे स्थापयामास ॥

एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदः । तस्य शिष्यास्त्रयो बभूवुः । उपमन्युरारुणिर्वेदश्चेति । स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास । गच्छ केदारखण्डं बधानेति । स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत् । स क्लिश्यमानोऽपश्यदुपायं । भवत्वेवं करिष्यामीति । स तत्र संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ । ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् ।

क्वारुणिः पाञ्चाल्यो गत इति । ते तं प्रत्यूचुः । भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्तस्ताञ्छिष्यान्प्रत्युवाच । तस्मात्तत्र सर्वे गच्छामो यत्र स गत इति । स तत्र गत्वा तस्याह्वानाय शब्दं चकार । भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति । स तच्छ्रुत्वारुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे प्रोवाच चैनं । अयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः । तदभिवादये भगवन्तं । आज्ञापयतु भवान् । कमर्थं करवाणीति । तं स एवमुक्त उपाध्यायः प्रत्युवाच । यस्माद्भवान्केदारखण्डं विदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान्भविष्यतीत्युपाध्यायेनानुगृहीतः । यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि । सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । स एवमुक्त उपाध्यायेनेष्टं देशं जगाम ॥

अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास । वत्सोपमन्यो गा रक्षस्वेति । स उपाध्यायवचनादरक्षद्गाः । स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा न-

मश्चक्रे । तमुपाध्यायः पीवानमपश्यदुवाच चैनं । वत्सोपमन्यो केन वृत्तिं कल्पयसि । पीवानसि दृढमिति । स उपाध्यायं प्रत्युवाच । भो भैक्ष्येण वृत्तिं कल्पयामीति । तमुपाध्यायः प्रत्युवाच । मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति । स तथेत्युक्त्वा पुनररक्षद्गाः । अन्यदधिकं भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् । स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात् । स तथेत्युक्त्वा पुनररक्षद्गाः । अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्यं गृह्णामि । केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच । भगवते निवेद्य पूर्वमपरं चरामि । तेन वृत्तिं कल्पयामीति । तमुपाध्यायः प्रत्युवाच । नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि । एवं वर्तमानो लुब्धो ऽसीति । स तथेत्युक्त्वा गा अरक्षत् । रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच । वत्सोपमन्यो ऽहं ते सर्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं । केन वृत्तिं कल्पयसीति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच ।

भो एतासां गवां पयसा वृत्तिं कल्पयामीति । तमुवाचोपाध्यायः । नैतन्न्याय्यं । पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति । स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं । केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच । भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान्पिबन्त उद्गिरन्ति । तमुपाध्यायः प्रत्युवाच । एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति । तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः फेनमपि भवान्न पातुमर्हतीति । स तथेति प्रतिश्रुत्य पुनररक्षद्गाः । तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते । स कदाचिदरण्ये क्षुधार्त्तो ऽर्कपत्राण्यभक्षयत् । स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतो ऽन्धो बभूव । ततः सो ऽन्धो ऽपि तत्र चङ्क्रम्यमाणः कूपे पपात । अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिन्युपाध्यायः शिष्यानवोचत् । नायात्युपमन्युः । त ऊचुः । वनं गतो गा रक्षितुमिति ।

तानाह्वोपाध्यायः । मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितः । ततो नागच्छति चिरगतश्चान्वेष्य इति । एवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार । भो उपमन्यो क्वासि वत्स एहीति । स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैः । अयमस्मिन्कूपे पतितो ऽहमिति । तमुपाध्यायः प्रत्युवाच । कथं त्वमस्मिन्कूपे पतित इति । स उपाध्यायं प्रत्युवाच । अर्कपत्राणि भक्षयित्वान्धीभूतो ऽस्म्यतः कूपे पतित इति । तमुपाध्यायः प्रत्युवाच । अश्विनौ स्तुहि । तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्तारविति । स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः ॥

॥ अथोपमन्युस्तवः ॥

प्र पूर्वगौ पूर्वजौ चित्रभानू गिरा वाशंसामि तपसा ह्यनन्तौ । दिव्यौ सुपर्णौ विरजौ विमानावधिक्षिषन्तौ भुवनानि विश्वा ॥ १ ॥

हिरण्मयौ शकुनी साम्परायौ नासत्यदस्रौ सुनसौ वैजयन्तौ । शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः ॥ २ ॥

ग्रस्तां सुपर्णस्य बलेन वर्तिकाममुञ्चतामश्विनौ सौभ-

गाय । तावत्सुवृत्तावनमन्त मायया वसत्तमा गा अरुणा उदा ऽवहन् ॥ ३ ॥

षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं डुहन्ति । नानागोष्ठाविहिता एकदोहनास्तावश्विनौ डुहतो घर्ममुक्थ्यं ॥ ४ ॥

एकां नाभिं सप्तशता अराः श्रिताः प्रधिष्वन्या विंशतिरर्पिता अराः । अनेमिश्चक्रं परिवर्तते ऽजरं माया ऽश्विनौ समनक्ति चर्षणी ॥ ५ ॥

एकं चक्रं वर्तते द्वादशारं षण्णाभिमेकात्तममृतस्य धारणं । यस्मिन्देवा अधि विश्वे विषक्तास्तावश्विनौ मुञ्चतो मा विषीदतं ॥ ६ ॥

अश्विनाविन्दुममृतं वृत्तंभूयौ तिरोधत्तामश्विनौ दासपत्नी । हित्वा गिरिमश्विनौ गा मुदा चरन्तौ तद्वृष्टिमह्ना प्रस्थितौ बलस्य ॥ ७ ॥

युवां दिशो जनयथो दशाग्रे समानं मूर्ध्नि रथयातं वियन्ति । तासां यातमृषयो ऽनु प्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ८ ॥

युवां वर्णान्विकुरुथो विश्वरूपांस्ते ऽधिक्षिपन्ते भुवनानि विश्वा । ते भानवो ऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ९ ॥

तौ नासत्यावश्विनौ वां महे ऽहं स्रजं च यां बिभृथः पुष्करस्य । तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदे न सूते ॥१०॥

मुखेन गर्भं लभेतां युवानौ गतासुरेतत्प्रपदे न सूते । सद्योजातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाः ॥११॥

इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं । प्रीतौ स्व एष ते ऽपूपो ऽशानैनमिति । स एवमुक्तः प्रत्युवाच । नानृतपूर्वमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवे ऽनिवेद्येति । ततस्तमश्विनावूचतुः । आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे । त्वमपि तथैव कुरुष्व यथा ते कृतमुपाध्यायेनेति । स एवमुक्तः प्रत्युवाचैतौ । एतत्प्रत्यनुनये भवन्तावश्विनौ । नोत्सहे ऽहमनिवेद्य गुरवे ऽपूपमेनमुपयोक्तुमिति । तमश्विनावाहतुः । प्रीतौ स्वस्तवानया गुरुभक्त्या । उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतो ऽपि हिरण्मया भविष्यन्ति । चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति । स एवमुक्तो ऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयदाचचक्षे च । स चास्य प्रीतिमान्बभूव ।

आह चैनं । यथाश्विनावाहतुस्तथा त्वं श्रेयो ऽवाप्स्यसीति । सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । एषा तस्यापि परीक्षोपमन्योः ॥

अथापरः शिष्यस्तस्यैवायोदधौम्यस्य वेदो नाम । तमुपाध्यायः समादिदेश । वत्स वेद इहास्यतां तावन्मम गृहे कश्चित्कालं शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति । स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषापरो ऽवसद्गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलः । तस्य महता कालेन गुरुः परितोषं जगाम । तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप । एषा तस्यापि परीक्षा वेदस्य ॥

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत । तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः । स शिष्यान्न किञ्चिदुवाच । कर्म वा क्रियतां गुरुशुश्रूषा वेति । दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष । अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्य वरयित्वोपाध्यायं चक्रतुः । स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास । भो यत्किञ्चिदस्मद्गृहे

परिहीयते तदिच्छाम्यहमपरिहीयमानं भवता क्रियमाणमिति । स एवं प्रतिसन्दिश्योत्तङ्कं वेदः प्रवासं जगाम । अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म । स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः । उपाध्यायानी ते ऋतुमती । उपाध्यायश्च प्रोषितो ऽस्या यथायमृतुर्बन्ध्यो न भवति तथा क्रियतां । एषा विषीदतीति । स एवमुक्तस्ताः स्त्रियः प्रत्युवाच । न मया स्त्रीणां वचनादिदमकार्यं करणीयं । न ह्यहमुपाध्यायेन सन्दिष्टो ऽकार्यमपि त्वया कार्यमिति । तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात् । स तु तद्वृत्तान्तं तस्याशेषमुपलभ्य प्रीतिमानभूदुवाच चैनं । वत्सोत्तङ्क किं ते प्रियं करवाणीति । धर्मतो हि शुश्रूषितो ऽस्मि भवता । तेन प्रीतिः परस्परेण नौ संवृद्धा । तदनुजाने भवन्तं । सर्वानेव कामानवाप्स्यसि गम्यतामिति । स एवमुक्तः प्रत्युवाच । किं ते प्रियं करवाणीति । एवमाहुः ।

यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥

सो ऽहमनुज्ञातो भवतेच्छामीष्टं गुर्वर्थमुपहर्तुमिति । तेनैवमुक्त उपाध्यायः प्रत्युवाच । वत्सोत्तङ्क उष्यतां

तावदिति । स कदाचिदुपाध्यायमाहोत्तङ्कः । आज्ञापयतु भवान् । किं ते प्रियमुपहरामि गुर्वर्थमिति । तमुपाध्यायः प्रत्युवाच । वत्सोत्तङ्क बहुशो मां चोदयसि गुर्वर्थमुपहरामीति। तद्गच्छैनां प्रविश्योपाध्यायानीं पृच्छ किमुपहरामीति। एषा यद्ब्रवीति तदुपाहरस्वेति । स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छत् । भगवत्युपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुमिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुमिति । तदाज्ञापयतु भवती । किमुपहरामि गुर्वर्थमिति । सैवमुक्तोपाध्यायानी तमुत्तङ्कं प्रत्युवाच । गच्छ पौष्यं प्रति राजानं कुण्डले भिक्षितुं तस्य क्षत्रियया पिनद्धे । ते आनयस्व चतुर्थेऽहनि पुण्यकं भविता । ताभ्यामाबद्धाभ्यां शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि। तत्सम्पादयस्व । एवं हि कुर्वतः श्रेयो भविता । अन्यथा कुतः श्रेय इति । स एवमुक्तस्तया प्रातिष्ठतोत्तङ्कः । स पथि गच्छन्नपश्यदृषभमप्रतिमाणं तमधिरूढं च पुरुषमप्रतिमाणमेव । स पुरुष उत्तङ्कमभ्यभाषत। भो उत्तङ्क एतत्पुरीषमस्यर्षभस्य भक्षयस्वेति । स एवमुक्तो नैच्छत् । तमाह पुरुषो भूयः । भक्षयस्वोत्तङ्क मा विचारय । उपाध्यायेनापि ते भक्षितं पूर्वमिति । स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य मूत्रं

पुरीषं च भक्षयित्वोत्तङ्कः स सम्भ्रमादुत्थित एवोपस्पृश्य प्रतस्थे यत्र स क्षत्रियः पौष्यः । तमुपासीनमपश्यदुत्तङ्कः । स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच । अर्थी भवन्तमुपागतोऽस्मीति । स एनमभिवाद्योवाच । भगवन्पौष्यः खल्वहं किं करवाणीति । स तमुवाच । गुर्वर्थे कुण्डलयोरर्थेनाभ्यागतोऽस्मीति । ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति । तं प्रत्युवाच पौष्यः । प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति । स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् । स पौष्यं पुनरुवाच । न युक्तं भवताहमनृतेनोपचरितुं । न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता । नैनां पश्यामि । स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच । नियतं भवानुच्छिष्टः स्मर तावत् । न हि सा क्षत्रियोच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात् सैषा नाशुचेर्दर्शनमुपैतीति । अथैवमुक्त उत्तङ्कः स्मृत्वोवाच । अस्ति खलु मयोत्थितेनोपस्पृष्टं शीघ्रं गच्छता चेति । तं पौष्यः प्रत्युवाच । एष ते व्यतिक्रमः । नोत्थितेनोपस्पृष्टं भवति शीघ्रं गच्छता चेति । अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभि-

र्हृद्गताभिरद्भिस्त्रिः पीत्वा द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश । ततस्तां क्षत्रियामपश्यत् । सा च दृष्ट्वोत्तङ्कं प्रत्युत्थायाभिवाद्योवाच । स्वागतं ते भगवन्नाज्ञापय किं करवाणीति । स तामुवाच । एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति । सा प्रीता तेन तस्य सद्भावेन पात्रो ऽयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले ऽवमुच्यास्मै प्रायच्छदाह चैनं । एते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयति । अप्रमत्तो नेतुमर्हसीति । स एवमुक्तस्तां क्षत्रियां प्रत्युवाच । भगवति सुनिर्वृता भव । न मां शक्तस्तक्षको नागराजो धर्षयितुमिति । स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छदाह चैनं । भोः पौष्य प्रीतो ऽस्मीति । तमुत्तङ्कं पौष्यः प्रत्युवाच । भगवंश्चिरेण पात्रमासाद्यते भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्तुं । क्रियतां क्षण इति । तमुत्तङ्कः प्रत्युवाच । कृतक्षण एवास्मि । शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवतेति । स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास । अथोत्तङ्कः सकेशं शीतमन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच । यस्मान्मे ऽशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति । तं पौष्यः प्रत्युवाच । यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मा-

त्वमनपत्यो भविष्यसीति । तमुत्तङ्कः प्रत्युवाच । न युक्तं भवतान्नमशुचि दत्त्वा प्रतिशापं दातुं । तस्मादन्नमेव प्रत्यक्षीकुरु । ततः पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरोक्षयामास । अथ तदन्नं मुक्तकेश्या स्त्रिया यत्कृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा तमृषिमुत्तङ्कं प्रसादयामास । भगवन्नेतदज्ञानादन्नं सकेशमुपाहृतं शीतं तत्क्षामये भवन्तं न भवेयमन्ध इति । तमुत्तङ्कः प्रत्युवाच । न मृषा ब्रवीमि । भूत्वा त्वमन्धो न चिरादनन्धो भविष्यसीति । ममापि शापो भवता दत्तो न भवेदिति । तं पौष्यः प्रत्युवाच । न चाहं शक्तः शापं प्रत्यादातुं न हि मे मन्युरद्याप्युपशमं गच्छति । किं चैतद्भवता न ज्ञायते । यथा । नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः । तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ् नवनीतं हृदयं तीक्ष्णधारमिति । तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्तुं गम्यतामिति । तमुत्तङ्कः प्रत्युवाच । भवताहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः । प्राक्ते ऽभिहितं । यस्माद्दुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति । दुष्टे चान्ने नैष मम शापो भविष्यतीति । साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा । सो ऽपश्यदथ पथि

नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानं च । अथोत्तङ्कस्ते कुण्डले सन्न्यस्य भूमावुदकार्थं प्रचक्रमे । एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् । तमुत्तङ्को ऽभिसृत्य कृतोदककार्यः शुचिः प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् । तस्य तक्षको दृढमासन्नः । स तं जग्राह । गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश । प्रविश्य च नागलोकं स्वभवनमगच्छत् । अथोत्तङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत् । स तद्बिलं दण्डकाष्ठेन चखान न चाशकत् । तं क्लिश्यमानमिन्द्रो ऽपश्यत् । स वज्रं प्रेषयामास । गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति । अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् । तमुत्तङ्को ऽनुविवेश तेनैव बिलेन प्रविश्य च तं नागलोकमपर्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्यूहशतसङ्कुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् । स तत्र नागांस्तानस्तुवदेभिः श्लोकैः । उत्तङ्क उवाच ।

य ऐरावतराजानः सर्पाः समिति शोभनाः ।
क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १ ॥

सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ २ ॥
बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे ।
तत्रस्थानपि संस्तौमि महतः पन्नगानहं ॥ ३ ॥
इच्छेत्को ऽर्कांशुसेनायां चर्तुमैरावतं विना ।
शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः ।
सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रे समेजति ॥ ४ ॥
ये चैनमुपसर्पन्ति ये च दूरपथं गताः ।
अहमैरावतज्येष्ठभ्रातृभ्यो ऽकरवं नमः ॥ ५ ॥
यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्पुरा ।
तं नागराजमस्तौषं कुण्डलार्थाय तक्षकं ॥ ६ ॥
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ।
कुरुक्षेत्रे न्यवसतां नदीमिक्षुमतीमनु ॥ ७ ॥
जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः ।
अवसद्यो महद्युम्नि प्रार्थयन्नागमुख्यतां ।
करवाणि सदा चाहं नमस्तस्मै महात्मने ॥ ८ ॥
एवं स्तुत्वा स विप्रर्षिरुत्तङ्को भुजगोत्तमान् ।
नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत् ॥ ९ ॥

एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभत्तदाप-श्यत्स्त्रियौ तन्त्रे ऽधिरोप्य सुवेमे पटं वयन्त्यौ । तस्मिं-

स्तन्त्रे कृष्णाः सिताश्च तन्तवश्चक्रं चापश्यद्द्वादशारं षड्-
भिः कुमारैः परिवर्त्यमानं । पुरुषं चापश्यदश्वं च दर्श-
नीयं । स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः ।

त्रीण्यर्पितान्यत्र शतानि मध्ये
षष्टिश्च नित्यं चरति ध्रुवे ऽस्मिन् ।
घक्रे चतुर्विंशतिपर्वयोगे
षड्वै कुमाराः परिवर्तयन्ति ॥ १० ॥
तन्त्रं चेदं विश्वरूपे युवत्यौ
वयतस्तन्तून्सततं वर्तयन्त्यौ ।
कृष्णान्सितांश्चैव विवर्तयन्त्यौ
भूतान्यजस्रं भुवनानि चैव ॥ ११ ॥
वज्रस्य भर्ता भुवनस्य गोप्ता
वृत्रस्य हन्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा
सत्यानृते यो विविनक्ति लोके ॥ १२ ॥
यो वाजिनं गर्भमपां पुराणं
वैश्वानरं वाहनमभ्युपैति ।
नमो ऽस्तु तस्मै जगदीश्वराय
लोकत्रयेशाय पुरन्दराय ॥ १३ ॥

ततः स एनं पुरुषः प्राह । प्रीतो ऽस्मि ते ऽहमनेन

स्तोत्रेण । किं ते प्रियं करवाणीति । स तमुवाच । नागा मे वशमीयुरिति । स चैनं पुरुषः पुनरुवाच । एतमश्वमपाने धमस्वेति । ततोऽश्वस्यापानमधमत् । ततोऽश्वाद्धम्यमानात्सर्वस्रोतोभ्यः पावकार्चिषः सधूमा निष्पेतुः । ताभिर्नागलोक उपधूपिते ऽथ सम्भ्रान्तस्तक्षको ऽग्नेस्तेजोभयाद्विषण्णः कुण्डले गृहीत्वा सहसा भवनान्निष्क्रम्योत्तङ्कमुवाच । इमे कुण्डले गृह्णातु भवानिति । स ते प्रतिजग्राहोत्तङ्कः प्रतिगृह्य च कुण्डले ऽचिन्तयत् । अद्य तत्पुण्यकमुपाध्यायान्या दूरं चाहमभ्यागतः । स कथं सम्भावयेयमिति । तत एनं चिन्तयानमेव स पुरुष उवाच । उत्तङ्क एनमेवाश्वमधिरोह । एष त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यतीति । स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलं । उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टोत्तङ्को नागच्छतीति शापायास्य मनो दधे । अथैतस्मिन्नन्तरे स उत्तङ्कः प्रविश्योपाध्यायगृहं उपाध्यायानीमभ्यवादयत्ते चास्यै कुण्डले प्रायच्छत् । सा चैनं प्रत्युवाच । उत्तङ्क देशकाले ऽभ्यागतः । स्वागतं ते वत्स त्वं मनागसि मया न शप्तः । श्रेयस्तवोपस्थितं । सिद्धिमाप्नुहीति । अथोत्तङ्क उपाध्यायमभ्यवादयत् । तमु-

पाध्यायः प्रत्युवाच । वत्सोत्तङ्क स्वागतं ते । किं चिरं कृतमिति । तमुत्तङ्क उपाध्यायं प्रत्युवाच । भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन्कर्मणि । तेनास्मि नागलोकं गतः । तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ तस्मिंश्च कृष्णाः सिताश्च तन्तवः । किं तत् । तत्र च मया चक्रं दृष्टं द्वादशारं षट् चैनं कुमाराः परिवर्तयन्ति । तदपि किं । पुरुषश्चापि मया दृष्टः । स चापि कः । अश्वश्चातिप्रमाणो दृष्टः । स चापि कः । पथि गच्छता च मया ऋषभो दृष्टस्तं च पुरुषोऽधिरूढः । तेनास्मि सोपचारमुक्तः । उत्तङ्क अस्यर्षभस्य पुरीषं भक्षय उपाध्यायेनापि ते भक्षितमिति । ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तं । स चापि कः । तदेतद्भवतोपादिष्टमिच्छेयं श्रोतुं किं तदिति ।

स तेनैवमुक्त उपाध्यायः प्रत्युवाच । ये ते स्त्रियौ धाता विधाता च । ये च ते कृष्णाः सिताश्च तन्तवस्ते रात्र्यहनी । यदपि तच्चक्रं द्वादशारं षट् च कुमाराः परिवर्तयन्ति तेऽपि षड् ऋतवः । संवत्सरश्चक्रं । यः पुरुषः स पर्जन्यः । योऽश्वः सोऽग्निः । य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराट् । यश्चैनमधिरूढः पुरुषः स चेन्द्रः । यदपि ते भक्षितं तस्यर्षभस्य पुरीषं

तदमृतं । तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वं । स हि भगवानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान् । तस्मात्कुण्डले गृहीत्वा पुनरागतो ऽसि । तत्सौम्य गम्यतां । अनुजाने भवन्तं । श्रेयो ऽवाप्स्यसीति । स उपाध्यायेनानुज्ञातो भगवानुत्तङ्कः क्रुद्धस्तक्षकं प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे ।

स हास्तिनपुरं प्राप्य न चिराद्विप्रसत्तमः ।
समागच्छत राजानमुत्तङ्को जनमेजयं ॥ १४ ॥
पुरा तक्षशिलासंस्थं निवृत्तमपराजितं ।
सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतं ॥ १५ ॥
तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः ।
उवाचैनं वचः काले शब्दसम्पन्नया गिरा ॥ १६ ॥

॥ उत्तङ्क उवाच ॥

अन्यस्मिन्करणीये तु कार्ये पार्थिवसत्तम ।
बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १७ ॥

॥ सौतिरुवाच ॥

एवमुक्तस्तु विप्रेण स राजा जनमेजयः ।
अर्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमं ॥ १८ ॥

॥ जनमेजय उवाच ॥

आसां प्रजानां परिपालनेन

त्वं क्षत्रधर्मं परिपालयामि ।
प्रब्रूहि मे किं करणीयमद्य
येनासि कार्येण समागतस्त्वं ॥ १९ ॥

॥ सौतिरुवाच ॥

स एवमुक्तस्तु नृपोत्तमेन
द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
उवाच राजानमदीनसत्त्वं
स्वमेव कार्यं नृपते कुरुष्व ॥ २० ॥

॥ उत्तङ्क उवाच ॥

तक्षकेण महीन्द्रेन्द्र येन ते हिंसितः पिता ।
तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने ॥ २१ ॥
कार्यकालं हि मन्येऽहं विधिदृष्टस्य कर्मणः ।
तद्गच्छापचितिं राजन्पितुस्तस्य महात्मनः ॥ २२ ॥
तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना ।
पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः ॥ २३ ॥
बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः ।
अकार्यं कृतवान्पापो योऽदशत्पितरं तव ॥ २४ ॥
राजर्षिवंशगोप्तारममरप्रतिमं नृपं ।
यियासुं काश्यपं चैव न्यवर्तयत पापकृत् ॥ २५ ॥
होतुमर्हसि तं पापं ज्वलिते हव्यवाहने ।

सर्पसत्रे महाराज त्वरितं तद्विधीयतां ॥ २६ ॥
एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि ।
मम प्रियं च सुमहत्कृतं राजन्भविष्यति ॥ २७ ॥
कर्मणः पृथिवीपाल मम येन दुरात्मना ।
विघ्नः कृतो महाराज गुर्वर्थं चरतो ऽनघ ॥ २८ ॥

॥ सौतिरुवाच ॥

एतच्छ्रुत्वा तु नृपतिस्तक्षकाय चुकोप ह ।
उत्तङ्कवाक्यहविषा दीप्तो ऽग्निर्हविषा यथा ॥ २९ ॥
अपृच्छत्स तदा राजा मन्त्रिणः स्वान्सुदुःखितः ।
उत्तङ्कस्यैव सान्निध्ये पितुः स्वर्गगतिं प्रति ॥ ३० ॥
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतो ऽभवत् ।
यदैवं वृत्तं पितरमुत्तङ्काद्शृणोत्तदा ॥ ३१ ॥

॥ इति श्रीमहाभारते
आदिपर्वणि पौष्योपाख्यानं समाप्तं ॥

---

॥ अथ कुशीलवयोरध्यापनं ॥

कृत्वा तु तन्महाप्राज्ञः काव्यं रामायणाह्वयं ।
चिन्तयामास को न्वेतल्लोके ऽस्मिन्प्रथयेदिति ॥ १ ॥
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः ।
अगृह्णीतां ततः पादौ मुनिवेशौ कुशीलवौ ॥ २ ॥

कुशीलवौ स धर्मात्मा राजपुत्रौ यशस्विनौ ।
भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ ॥ ३ ॥
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ४ ॥
काव्यं रामायणं यत्र सीतायाश्चरितं महत् ।
पौलस्त्यवधसंयुक्तं श्रोतृश्रुतिसुखावहं ॥ ५ ॥
पाठे गेये च मधुरं प्रमाणैस्त्रिभिरन्वितं ।
जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितं ॥ ६ ॥
शृङ्गारवीरबीभत्सरौद्रहास्यभयानकैः ।
करुणाद्भुतशान्तैश्च युक्तं काव्यरसैरपि ॥ ७ ॥
बहुमानाच्च वाल्मीकेः काव्यस्य च सुखादपि ।
वाग्विधेयं यदा ताभ्यां कृतं तच्चाप्यशेषतः ॥ ८ ॥
स तौ मूर्धन्युपाघ्राय वाल्मीकिर्भगवानृषिः ।
प्रोवाचेदं तदा वाक्यं प्रणतावग्रतः स्थितौ ॥ ९ ॥
गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि ।
राजर्षीणां पुण्यकृतां साधूनां च समागमे ॥ १० ॥
तौ तु गान्धर्वतत्त्वज्ञौ तालमूर्च्छनकोविदौ ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥ ११ ॥
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथापरौ ।
यथोपदिष्टमृषिणा जगतुः सुसमाहितौ ॥ १२ ॥

तौ कदाचित्समेतानामृषीणां भावितात्मनां ।
आसीनानां समीपस्थाविदं काव्यमगायतां ॥ १३ ॥
श्रुत्वा तु मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु साध्विति तावूचुः परं विस्मयमागताः ॥ १४ ॥
ते प्रीतमनसश्चैव मुनयो धर्मवत्सलाः ।
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १५ ॥
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरवृत्तमपि ह्येतत्प्रत्यक्षमिव दर्शितं ॥ १६ ॥
एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महर्षिभिः ।
संरक्ततरमत्यर्थं मधुरं तावगायतां ॥ १७ ॥
प्रीतः कश्चिन्मुनिस्ताभ्यां पानीयकलसं ददौ ।
कश्चिद्वनफलं स्वादु वल्कलं कश्चिदीप्सितं ॥ १८ ॥
अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रमथापरः ।
कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥ १९ ॥
ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ।
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ २० ॥
यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथापरः ।
औडुम्बरीवृषीमन्यः स्वस्ति केचित्तथावदन् ॥ २१ ॥
आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ।
ददुश्चैव वरान्सर्वे मुनयः सत्यवादिनः ॥ २२ ॥

एवं पूर्वमिदं काव्यं मुनिभिः प्रतिपूजितं ।
जीवभूतं मनुष्याणां कवीनामुपजीवनं ॥ २३ ॥
प्रशस्यमानौ सर्वत्र एतावपि हि गायनौ ।
राजधानीषु राज्ञां च समाजेष्वभ्यगायतां ॥ २४ ॥
अथाश्वमेधे रामोऽपि तावुपश्रुत्य गायनौ ।
सत्कृत्यानाययामास पुरुषैराप्तकारिभिः ॥ २५ ॥
आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ।
उपोपविष्टः सचिवैर्भ्रातृभिश्च समन्वितः ॥ २६ ॥
दृष्ट्वाथ रूपसम्पन्नौ विनीतौ भ्रातरावुभौ ।
उवाच लक्ष्मणं रामः सर्वांश्चैव सभासदः ॥ २७ ॥
श्रूयतामेतदाख्यानमनयोर्देववर्चसोः ।
विचित्रार्थपदं सम्यग्गायतोर्मधुरस्वरं ॥ २८ ॥
तौ चापि मधुरं रक्तं स्वचित्तायत्तनिस्वनं ।
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायतां ॥ २९ ॥
ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ।
श्रोत्राशयसुखं गेयं तद्बभौ जनसंसदि ॥ ३० ॥

इमौ हि बालौ नृपलक्षणान्वितौ
कुशीलवौ चैव तपोवनाश्रयौ ।
ममेति वृत्तं किल गेयमद्भुतं
महर्षिवाल्मीकिकृतं प्रगास्यतः ॥ ३१ ॥

ततस्तु तौ राघवसम्प्रचोदिता-
वगायतां काव्यमिदं यथाक्रमं ।
स चापि रामः सहितः सभासदै-
र्बभूव तत्रार्पितचेतनस्तदा ॥ ३२ ॥
॥ इति रामायणे बालकाण्डे
कुशीलवयोरध्यापनं नाम चतुर्थः सर्गः ॥

---

॥ अथ ब्रह्मदत्तविवाहः ॥

ब्रह्मयोनिर्महानासीत्कुशो नाम जनाधिपः ।
अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥
स महात्मा कुलीनायां जायायां सुमहाबलान् ।
वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान् ॥ २ ॥
कुशाम्बं कुशनाभं च अमूर्तरजसं वसुं ।
दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥ ३ ॥
तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलं ॥ ४ ॥
कुशस्य वचनं श्रुत्वा चत्वारो लोकसम्मताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीं ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयं ॥ ६ ॥

अमूर्तरजसो नाम धर्मारण्यं महीपतेः ।
चक्रे पुरवरं राजा वसुर्नाम गिरिव्रजं ॥ ७ ॥
एषा वसुमती राम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥
सुमागधी नदी रम्या मगधान्विश्रुता ययौ ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥
सैषा हि मागधी नाम वसोस्तस्य महात्मनः ।
पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ १० ॥
कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमं ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११ ॥
रूपयौवनशालिन्यस्ताः कदाचित्स्वलंकृताः ।
उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च राघव ।
आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥
अथ ताश्चारुसर्वाङ्गी रूपेणाप्रतिमा भुवि ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १४ ॥
अहं वः कामये सर्वा भार्या मम भविष्यथ ।
मानुष्यस्त्यजतां भावो दीर्घमायुरवाप्स्यथ ॥ १५ ॥
चलं हि यौवनं नित्यं मानुषेषु विशेषतः ।
अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥ १६ ॥

तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ।
अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १७ ॥
अन्तश्चरसि भूतानां सर्वेषां किल मारुत ।
प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे ॥ १८ ॥
कुशनाभसुताः सर्वाः समर्थाश्च सुरोत्तम ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु कुलं वयं ॥ १९ ॥
मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनं ।
नावमन्य स्वधर्मेण स्वयंवरमुपास्महे ॥ २० ॥
पिता वै प्रभुरस्माकं दैवतं परमं हि सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २१ ॥
तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २२ ॥
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहं ।
प्रापतन्भुवि सम्भ्रान्ताः सलज्जाः साश्रुलोचनाः ॥ २३ ॥
स च ता दयिता दीनाः कन्याः परमशोभनाः ।
दृष्ट्वा भग्नास्तदा राजा सम्भ्रान्त इदमब्रवीत् ॥ २४ ॥
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वाश्चेष्टन्त्यो नाभिभाषथ ॥ २५ ॥
तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ २६ ॥

वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २७ ॥
सोऽस्माभिरुक्तः सर्वाभिर्वायुः कामवशं गतः ।
पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः ॥ २८ ॥
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ।
न वयं स्वैरचारिण्यः प्रसीद भगवन्निति ॥ २९ ॥
तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्म वायुनाभिहता भृशं ॥ ३० ॥
तासां तु वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमं ॥ ३१ ॥
क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतं ।
ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ३२ ॥
अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वै ।
दुष्करं तच्च वै क्षान्तं त्रिदशेषु विशेषतः ॥ ३३ ॥
क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ।
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् ॥ ३४ ॥
प्रदानसमयं चैव मन्ये ऽहं वो ऽद्य सर्वशः ।
गम्यतामिष्टतः पुत्र्यश्चिन्तयिष्यामि वो हितं ॥ ३५ ॥
विसृज्य चैव ताः कन्यास्ततः स नृपसत्तमः ।
तासां प्रदानं धर्मज्ञो मन्त्रयामास मन्त्रिभिः ॥ ३६ ॥

यद्वायुना च ताः कन्यास्तत्र कुब्जीकृताः पुरा ।
कान्यकुब्जमिति ख्यातं ततःप्रभृति तत्पुरं ॥ ३७ ॥
एतस्मिन्नेव काले तु चूली नाम महाद्युतिः ।
ऊर्द्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ३८ ॥
तपस्यन्तमृषिं तत्र गन्धर्वी पर्युपासत ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ ३९ ॥
सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ ४० ॥
स च तां कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियं ॥ ४१ ॥
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदं ॥ ४२ ॥
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकं ॥ ४३ ॥
अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ।
ब्राह्मणोपगतायास्त्वं दातुमर्हसि मे सुतं ॥ ४४ ॥
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमं ।
ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतं ॥ ४५ ॥
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत्तदा ।
काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवं ॥ ४६ ॥

स बुद्धिं कृतवान्राजा कुशनाभः सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ ४७ ॥
तमाहूय महातेजा ब्रह्मदत्तं महीपतिं ।
ददौ कन्याशतं तस्मै सुप्रीतेनान्तरात्मना ॥ ४८ ॥
यथाक्रमं तदा पाणिं जग्राह रघुनन्दन ।
ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ ४९ ॥
स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वराः ।
युक्तं परमया लक्ष्म्या बभौ कन्याशतं तदा ॥ ५० ॥
स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ ५१ ॥
कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ।
सदारं प्रेषयामास स्वपुरं परमार्चितं ॥ ५२ ॥
यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ।
स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥ ५३ ॥

॥ इति बालकाण्डे
ब्रह्मदत्तविवाहो नाम चतुस्त्रिंशः सर्गः ॥

---

॥ अथ गृहस्थविधिसारः ॥

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रो ऽर्द्धपञ्चमान् ॥ ९५ ॥

श्रावण्यामिति । श्रावणस्य पौर्णमास्यां भाद्रपदस्य वा स्वगृह्यानुसारेण उपाकर्माख्यं कर्म कृत्वा सार्द्धांश्चतुरो मासान् ब्राह्मण उद्युक्तो वेदानधीयीत ॥ ९५ ॥

इमान्नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनं च कुर्वाणः शिष्याणां विधिपूर्वकं ॥ १०१ ॥

इमानिति । इमान्वक्ष्यमाणाननध्यायान्सर्वथा यथोक्तविधिना अधीयानः शिष्याध्यापनं च कुर्वाणो गुरुर्वर्जयेत् ॥ १०१ ॥

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।
श्वखरोष्ट्रे च रुवति पंक्तौ च न पठेद्द्विजः ॥ ११५ ॥

पांशुवर्ष इति । धूलीवर्षे दिशां दाहे शृगालकुक्कुरगर्दभोष्ट्रेषु च रुवत्सु पंक्तौ चोपविश्य प्रकृतत्वात् शृगालश्वखरादीनामेव ब्राह्मणो न पठेत् ॥ ११५ ॥

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा ।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥ ११६ ॥

नाधीयीतेति । श्मशानसमीपे ग्रामसमीपे गोष्ठे च मैथुनसमयधृतवासः परिधाय श्राद्धीयं च सिद्धान्नादि प्रतिगृह्य नाधीयीत ॥ ११६ ॥

प्राणि वा यदि वाप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत् ।
तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः ॥ ११७ ॥

प्राणि वेति । श्राद्धिकमन्नादि भुक्त्वा तावदनध्यायो भवतीत्युक्तं प्राणि वा गवाश्वादि अप्राणि वा वस्त्रमाल्यादि प्रतिग्रहकाले हस्तेन गृहीत्वानध्यायो भवति यस्मात्पाणिरेवास्यमस्येति पाण्यास्यो हि ब्राह्मणः स्मृतः ॥ ११७ ॥

चौरैरुपप्लुते ग्रामे सम्भ्रमे चाग्निकारिते ।
आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च ॥ ११८ ॥

चौरैरिति । चौरैरुपप्लुते ग्रामे गृहदाहादिकृते भये दिव्यान्तरीक्षभौमेषु चाद्भुतेषु उत्पातेषु आकालिकमनध्यायं जानीयात् ॥ ११८ ॥

*

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनं ।
न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥१२०॥

नाधीयीतेति । तुरगतरुकरिनौकाखरोष्ट्रारूढः । तथोषरदेशस्थः शकटादियानेन गच्छन्नाधीयीत ॥१२०॥

न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न शुक्तके ॥ १२१ ॥

न विवाद इति। विवादे वाक्कलहे कलहे दण्डादण्डादौ सेनायामप्रवृत्तयुद्धायां सङ्गरे युद्धे। भोजनानन्तरं च यावदार्द्रहस्तो यावदार्द्रपाणिरिति वसिष्ठस्मरणात्। तथा अजीर्णेऽन्ने वमनं च कृत्वा अम्लोद्गारे च न पठेत् ॥१२१॥

अतिथिं चाननुज्ञाप्य मारुते वाति वा भृशं ।
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥१२२॥

अतिथिमिति । अध्ययनं करोमीति यावदतिथिरनुज्ञापितो न भवति मारुते चात्यर्थं वाति रुधिरे च गात्रात्स्रुते रुधिरस्रावं विनापि शस्त्रेण क्षतमात्रे जाते नाधीयीत॥

क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतं ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ १३५ ॥

क्षत्रियमिति । वृद्ध्यर्थो भूधातुः भूष्णुः धनायुरादिना वर्धनशीलः क्षत्रियं सर्पं बहुश्रुतं च ब्राह्मणं नावजानीयात् । कृशानपि तत्काले प्रतीकाराक्षमान् ॥

एतत्त्रयं हि पुरुषं निर्दहेदवमानितं ।
तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥ १३६ ॥

एतत्त्रयमिति। एतत्त्रयमवमानितं सदवमन्तारं विनाशयति क्षत्रियसर्पौ दृष्टशक्त्या ब्राह्मणश्चाभिचारादिना दृष्टेन तस्मात्कल्याणबुद्धिरेतत्त्रयं सर्वदा नावजानीयात्॥१३६॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियं ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥१३८॥

सत्यं ब्रूयादिति । यथादृष्टश्रुतं तत्त्वं ब्रूयात् तथा प्रीतिसाधनं ब्रूयात् पुत्रस्ते जात इति । यथादृष्टश्रुतमप्यप्रियं पुत्रस्ते मृत इत्यादि न वदेत् । प्रियमपि न मिथ्या वदेत् । एष वेदमूलतया नित्यो धर्मः ॥ १३८ ॥

हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ १४१ ॥

हीनाङ्गानिति । हीनाङ्गाधिकाङ्गमूर्खवृद्धकुरूपार्थहीनजातीन् काणशब्दाह्वानादिना न निन्देत् ॥ १४१ ॥

यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
न त्वेव तु कृतो ऽधर्मः कर्तुर्भवति निष्फलः ॥ १७३ ॥

यदीति । यदि अधर्मः कर्तुर्देहधनादिनाशं फलं न जनयति तदा तत्पुत्रेषु नो चेत्पौत्रेषु जनयति न तु निष्फल एव भवति । ननु अन्यकृतस्य कर्मणः कथमन्यत्र फलजनकत्वमुच्यते । पुत्रादिनाशस्य पितुः क्लेशहेतुत्वात् शास्त्रीयत्वाच्चास्यार्थस्य नाविश्वासः ॥ १७३ ॥

अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ १७४ ॥

अधर्मेणेति । अधर्मेण परद्रोहादिना तावदादौ ततो ग्रामधनादिना वर्धते । ततो भद्राणि बहुभृत्यगवाश्वादीनि हितानि लभते । ततः शत्रूनस्वस्मादपकृष्टान् जयति पश्चात्कियता कालेनाधर्मपरिपाकवशात् देहधनतनयादिसहितो विनश्यति ॥

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥ १७८ ॥

येनेति । बहुविधशास्त्रार्थसम्भवे पितृपितामहाद्यनुष्ठित एव शास्त्रार्थो ऽनुष्ठातव्यः । तेन गच्छन्न रिष्यते नाधर्मेण हिंस्यते ॥ १७८ ॥

मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ १८० ॥

आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः ।
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ॥१८४॥

आकाशेशास्त्विति । कृशः कृशधनः संश्रितो विवक्षितः बालवृद्धसंश्रितातुरा अन्तरीक्षे प्रभवन्ति । भ्राता च ज्येष्ठः पितृतुल्यः तस्मात्सोऽपि प्रजापतिलोके प्रभुः भार्यापुत्रौ च स्वशरीरमेव । अतः कथमात्मनैव सह विवादः सम्भवति ॥ १८४ ॥

छाया स्वा दासवर्गश्च दुहिता कृपणं परं ।
तस्मादेतैरधिक्षिप्तः सहेतासज्वरः सदा ॥ १८५ ॥

छायेति । स्वदासवर्गश्च नित्यानुगतत्वात् आत्मछायेव न विवादार्हः दुहिता च परं कृपापात्रं तस्मादेतैरधिक्षिप्तः सन् असन्तापः सहेत न तु विवदेत् ॥ १८५ ॥

धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २३८ ॥

धर्ममिति । सर्वप्राणिनां पीडां परिहरन् परलोकसहायार्थं यथाशक्ति शनैः शनैर्धर्ममनुतिष्ठेत् । यथा पुत्तिकाः पिपीलिकाप्रभेदाः शनैः शनैर्महान्तं मृत्तिकाकूटं सञ्चिन्वन्ति ॥ २३८ ॥

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ २३९ ॥

नामुत्रेति । यस्मात्परलोके सहायकार्यसिद्ध्यर्थं न पितृमातृपुत्रपत्नीज्ञातयस्तिष्ठन्ति किन्तु धर्म एवैको द्वितीयभावेनोपकारार्थमवतिष्ठते तस्मात्पुत्रादिभ्योऽपि महोपकारकं धर्ममनुतिष्ठेत् ॥ २३९ ॥

एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुंक्ते सुकृतमेक एव च दुष्कृतं ॥ २४० ॥

एक इति । एक एव प्राण्युत्पद्यते न बान्धवैः सहितः एक एव च म्रियते सुकृतफलमपि स्वर्गादिकं दुरितफलं च नरकादिकमेक एव भुंक्ते न मात्रादिभिः सह । तस्मान्मात्राद्यपेक्षयापि धर्मं न त्यजेत् ॥ २४० ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ २४१ ॥

मृतमिति । मृतं शरीरं मनःप्राणादित्यक्तं काष्ठलोष्टवदचेतनं भूमौ त्यक्त्वा पराङ्मुखा बान्धवा यान्ति न मृतं जीवमनुयान्ति धर्मस्तु तमनुगच्छति ॥ २४१ ॥

तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरं ॥ २४२ ॥

तस्मादिति । यस्माद्धर्मेण सहायेन दुस्तरं तमो नरकादिदुःखं तरति तस्माद्धर्मं सहायभावेन सततं शनैरनुतिष्ठेत् ॥ २४२ ॥

दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन् ।
अहिंस्रो दमदानाभ्यां जयेत्स्वर्गं तथाव्रतः ॥ २४६ ॥

दृढकारीति । प्रारब्धसम्पादयिता दृढकारी । मृदुरनिष्ठुरः । दमस्य पृथगुपादानाद्दान्त इति शीतातपादिद्वन्द्वसहिष्णुर्ग्रहीतव्यः । क्रूराचारैः पुरुषैः संसर्गं परिहरन् परिहिंसानिवृत्तः । तथाव्रत एव नियमदमेन्द्रियसंयमाख्येन दानेन च स्वर्गं प्राप्नोति ॥

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्ववृद्धिकरः शुभः ॥ २५९ ॥

॥ इति मानवधर्मशास्त्रे गृहस्थविधिसारः
श्रीकुल्लूकभट्टटीकासहितः ॥

---

॥ अथ कथानकपल्लवं ॥

वृद्धानां वचनं कार्यं ये च वृद्धा बहुश्रुताः ।
हंसयूथं वने बद्धं वृद्धबुद्ध्या विमोचितं ॥

अस्ति कस्मिंश्चिद्वनोद्देशे शाखाशतैरावृतो वटवृक्षः ।

तत्र च हंसकुलं प्रतिवसति स्म । ते प्रभाते प्राणयात्रां यथादिशं विधाय निशामुखे तत्रागत्य विश्रामं कुर्वन्ति । अथ तस्य वटस्याधस्तात्कौशाम्बी नाम वल्ली प्रादुर्भूता । एकस्मिन्नहनि वृद्धहंसेनोक्तं । एषा वल्ल्यमुं वटवृक्षमारोहति । सास्माकमतिविषमा । अनेनाश्रयेण कश्चिदिहारुह्य कदाचिदस्मान्हन्यादिति । यावदियं लघ्वी सुखछेद्या च तावदपनीयतामिति । अथ तस्य वचनमवगणय्य ते न तां वल्लीं छिन्नवन्तः । अथ कालक्रमात्सा वल्ली तं वृक्षं समन्तादारूढवती । अथ कदाचित्कश्चिद्व्याधस्तेषां हंसानामाहारार्थं विनिर्गतानां लतानुसारेण वटवृक्षं समारुह्य हंसावासेषु पाशानासज्य स्वकीयावासं ययौ । अथ ते हंसाः कृताहारविहारा निशायां यावदागतास्तावत्सर्वेऽपि पाशैर्बद्धाः । अथ वृद्धहंसोऽब्रवीत् । इदं तथापतितं पाशबन्धनव्यसनं यन्मम वचनमनादृत्य युष्माभिश्चेष्टितमिति । तदिदानीं सर्वे विनष्टाः स्मः । ततस्ते हंसास्तमूचुः । आर्य एवमवस्थिते किमधुना कर्तव्यं । अथासाववाह । यदि मम वचनं कुरुथ तदा यावदसौ व्याधः समभ्येति तावद्भवद्भिर्मृतकरूपेणासितव्यं । व्याधस्तु मृता एवैत इति मत्वा यावत्सर्वानपि भूमौ प्रक्षेप्स्यति ततः सर्वैः पतितैः तस्योत्तरत

एककालमुत्पतितव्यं । अथ वृत्ते सुप्रभाते व्याधः समायातो यावत्पश्यति तावत्ते सर्वे ऽपि मृतप्रायाः । ततस्तेन विश्वस्तमतिना पाशादवमुच्य क्रमेण सर्वे भूमौ प्रक्षिप्ताः । तं च ते ऽवतरणाय कृतोद्यमं दृष्ट्वा वृद्धहंसदत्तमतिप्रमाणेन सर्वे ऽपि समकालं समुत्पतिताः । अतो ऽहं ब्रवीमि ।

वृद्धानां वचनं कार्यं ये च वृद्धा बहुश्रुताः ।
हंसयूथं वने बद्धं वृद्धबुद्ध्या विमोचितं ॥

॥ इति पञ्चतन्त्रे ॥

---

उत्पन्नेष्वपि कार्येषु मतिर्यस्य न हीयते ।
स निस्तरति दुर्गाणि गोपी जारद्वयं यथा ॥ १ ॥

करटकः पृच्छति । कथमेतत् । दमनकः कथयति । अस्ति द्वारावत्यां नगर्यां कस्यचिद्गोपस्य वधूर्बन्धकी । सा च ग्रामस्य दण्डनायकेन तत्पुत्रेण च समं रमते । तथा चोक्तं ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ २ ॥

अन्यच्च । न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ ३ ॥

ततः कदाचिदसौ दण्डनायकपुत्रेण सह रममाणा

तिष्ठति । अथ दण्डनायको ऽप्यागतः । तं दृष्ट्वा तत्पुत्रं कुशूले धृत्वा दण्डनायकेन समं तथैवाक्रीडत् । अनन्तरं तस्या भर्ता गोपो गोष्ठात्समागतः । तमालोक्य गोप्योक्तं । दण्डनायक त्वं लगुडं गृहीत्वा कोपं दर्शयन्सत्वरं याहि । तथानुष्ठिते सति स गोपालः स्वगृहमागत्य भार्यां पृष्टवान् । केन कारणेनात्र दण्डनायकः समागतः । सा ब्रूते । अयं केनापि कारणेन पुत्रस्योपरि क्रुद्धः । स च पलायमानो ऽत्रागत्य प्रविष्टः । ततो मया कुशूले निक्षिप्य रक्षितः पित्रा चान्विष्यता गृहे न दृष्टः । अतो ऽयं कुपित एव गच्छति । ततः सा तत्पुत्रं कुशूलादवतार्य स्वामिनं दर्शितवती । तथा चोक्तं ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ४ ॥

अतो ऽहं ब्रवीमि । उत्पन्नेष्वपि कार्येषु इत्यादि ।
करटको ब्रूते । अस्त्वेवं किन्तु महान्निसर्गिकः स्नेहः कथं भेदयितुं शक्यः । दमनक आह । उपायश्चिन्तनीयः । तथा चोक्तं ।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काकी कनकसूत्रेण कृष्णसर्पमघातयत् ॥ ५ ॥

करटकः पृच्छति । कथमेतत् । दमनकः कथयति । कस्मिं-

श्चित्तरौ वायसदम्पती निवसतः । तयोश्चापत्यानि तरुकोटरेऽवस्थितकृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी ब्रूते । स्वामिन्त्यज्यतामयं तरुः । अत्र यावत्कृष्णसर्पस्तावदावयोः सन्ततिर्न भविष्यति कदाचित् । यतः ।

दुष्टा भार्या शठं मित्रं भृत्याश्चोत्तरदायकाः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ६ ॥

वायसो ऽवदत् । प्रिये न भेतव्यं । वारं वारं मयैतस्य महापराधः सोढः । इदानीं पुनर्न क्षन्तव्यः । वायस्याह । कथमनेन बलवता सार्द्धं भवान्विग्रहीतुं समर्थः । वायसो ब्रूते । अलमनया शङ्कया । यतः ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलं ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ७ ॥

वायस्याह । कथमेतत् । वायसः कथयति । अस्ति मन्दराभिधाने पर्वते दुर्गान्तो नाम सिंहः । स च पशूनां बधं सदा विदधान एव तत्रास्ते । ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः । स्वामिन्किमिति सर्वपशुच्छेदः क्रियते । वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयामः । सिंहेनोक्तं । यद्येतदभिमतं भवतां तर्हि भवतु । ततःप्रभृति प्रत्यहमेकैकं पशुं सभयमुपनयन्ति ते । अथ कदाचित्कस्यापि वृद्धशशकस्य

वारः समायातः । सोऽचिन्तयत् ।

प्राणहेतोस्तु विनयः क्रियते जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥८॥

तन्मन्दं मन्दमुपसर्पामि । इत्युपगच्छति सः । अथ तमालोक्य सिंहोऽपि क्षुधा पीडितः कोपादुवाच । कुतस्त्वं विलम्ब्यागतोऽसि । शशकोऽब्रवीत् । नायं ममापराधः । पथि सिंहान्तरेण बलाद्धृतः सन्पुनरागमनाय शपथं कृत्वा स्वामिनं तन्निवेदयितुमत्रागतः । सिंहः सकोपमाह । सत्वरं गत्वा दर्शय क्वासौ दुरात्मा तिष्ठति । ततः शशकस्तं दृप्तं गृहीत्वा गम्भीरकूपसमीपं गतः । अत्रागत्य पश्यतु स्वामीत्युक्त्वा तस्मिन्कूपजले तस्यैव सिंहस्य प्रतिबिम्बं दर्शितवान् । ततोऽसौ दर्पाध्मातः कोपात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः । अतोऽहं ब्रवीमि । बुद्धिर्यस्य बलं तस्येत्यादि । वायस्याह । सर्वमेतच्छ्रुतं मया । इदानीं यत्कर्तव्यं ब्रूहि । वायसोऽवदत् । अत्रासन्ने सरसि राजपुत्रः प्रत्यहमागत्य स्नाति । स्नानसमये तदङ्गादवतारितं कनकसूत्रं चञ्च्वा धृत्वानीयास्मिन्कोटरे धरिष्यसि । अथ कनकसूत्रानुसरणप्रवृत्तै राजपुरुषैः कोटरे निरूप्यमाणे स कृष्णसर्पो द्रष्टव्यो व्यापादयितव्यश्च । अथ कदाचि-

स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितं । तथानुष्ठिते तद्वृत्तं । अतो ऽहं ब्रवीमि । उपायेन हि यच्छक्यमित्यादि ॥

॥ इति हितोपदेशे ॥

---

उग्रं भयावहं रूपं भयघ्नं भयसूदनं ।
पापघ्नं पार्वतीपुत्रं नमामि गणनायकं ॥ १ ॥

अस्ति धर्मपुरी नाम नगरी । तत्र धर्मशीलो नाम राजा । तेन राज्ञा चण्डिकायतनं कारितं । अग्रे चतुःकुण्डं च । नित्यमेव राजा चण्डिकां पूजयित्वा भोजनं करोति । मन्त्रिणोक्तं । देव मम वचनं श्रूयतां ।

अपुत्रस्य गृहं शून्यं दिक्शून्याबान्धवस्य च ।
मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥ २ ॥

एवं मन्त्रिवचनं श्रुत्वा तेन राज्ञा देव्याः स्तुतिरारब्धा ।

नमस्ते देवि देवेशि ब्रह्मविष्ण्विन्द्रवन्दिते ।
चर्ममुण्डधरे चण्डे चतुर्वक्त्रे नमो नमः ॥ ३ ॥
शिवदेहोद्भवे सौम्ये महालक्ष्मि नमो ऽस्तु ते ।
जयदेवि महाघोरे रक्तमांसबलिप्रिये ॥ ४ ॥
कालरूपे कालरौद्रे कालरात्रि नमो ऽस्तु ते ।

महाप्रेतासनारूढे शिवाय च भयङ्करे ॥५॥
तालजङ्घे महाकाये निर्मांसि मांसभक्षणि ।
ऊर्द्धकेशोत्कटे क्षामे तारकाक्षि नमो ऽस्तु ते ॥६॥

इति स्तवेन देवी राधिता । देव्योक्तं ।
तुष्टाहं तव राजेन्द्र वरं ब्रूहि यथेप्सितं । राज्ञोक्तं ।
यदि त्वं देवि तुष्टासि पुत्रं मे देहि शोभनं ।

देव्युवाच ।

पुत्रस्ते भविता राजन्महाबलपराक्रमः ॥७॥
गन्धपुष्पाणि धूपानि नैवेद्यं बलिपूर्वकं ।
वस्त्राणि च हिरण्यानि यथाशक्यानि वेदय ॥८॥

एवं देव्या कथितमाकर्ण्य तद्राज्ञा कृतं । राज्ञः पुत्रो जातः । एवमन्यस्थाने कुण्डस्थानं कृत्वा देवीं पूजयति । तत्प्रतिज्ञां पूरयति । अन्यस्मिन्दिने कश्चिद्ग्रामान्तराद्रजको मित्रेण सह देवीं नमस्कर्तुं समागतः । यावद्देवीं नमस्कृत्य तत्रोपविशति तावत्तेन राजकीयरजकस्य कन्या अतीव रूपवती दृष्टा । तां विलोक्य क्षुभितो ऽसौ । तेनोक्तं । देवि भगवति यद्यनया सह मम विवाहो भवति तदा निजमस्तकेन पूजां करिष्यामि । इत्युक्त्वा निजनगरे गतः । तद्दिने विरहवेदना सञ्जाता । मित्रेण तस्य पितुरग्रे कथितं । तच्छ्रुत्वा-

नेन राजकीयरजकस्य गृहे गत्वा दुहिता याचिता लब्धा च । तेनागत्य परिणीता । कतिपयदिवसादूर्द्ध्वं मित्रेण सह भार्यां गृहीत्वा श्वशुरगृहे भेदनाय समायातः । यावद्गच्छति तावद्देव्यायतनं दृष्ट्वा भार्यामाह । हे प्रिये यावदहं देवीं नमस्कृत्य आगमिष्यामि तावन्मित्रसमीपे त्वमत्रैव तिष्ठ । इत्युक्त्वा गतो ऽसौ । तदात्र देवीं नमस्कृत्य निजशिरश्छित्त्वा पतितः पृथिवीतले । क्षणमात्रं प्रतीक्ष्य मित्रेण भणितं । तस्य गतस्य वेला लग्ना । अहं गत्वा शुद्धिं करोमि । यावदागच्छति तावच्छिन्नशीर्षो दृष्टः । भणितं च । यद्यहं व्यावृत्य गच्छामि तदा मम विरूपं च पठिष्यति । सो ऽपि निजशिरः क्षिप्त्वा पतितः । भार्यया चिन्तितं । तौ द्वौ कथं गतौ । यावद्गच्छति तावच्छिन्नशीर्षौ दृष्टौ । तदा निजोत्तरीयपाशं कण्ठे बद्ध्वा यावन्मर्तुमिच्छति तावद्देव्या भणितं । पुत्रि तुष्टाहं तव साहसेन । इदानीं वरं ब्रूहि । तयोक्तं । देवि भगवति यदि तुष्टासि तर्हि द्वावेतौ जीवेतां । देव्योक्तं । पुत्रि शीर्षे त्वरितं योजय । इति श्रुत्वा तया औत्सुक्याद्भर्तुः शीर्षं मित्रकबन्धे योजितं । भर्तुः कबन्धे मित्रशीर्षं योजितं । उभावपि उत्थितौ परस्परं विवादं कुरुतः ॥

एतत्कथानकं कथयित्वा वेतालेनोक्तं । राजन्कथय ।

सा कस्य भार्या भवति । राज्ञा विक्रमसेनेनोक्तं ।

सर्वौषधीनां मसनं प्रधानं
सर्वेषु पेयेषु जलं प्रधानं ।
सर्वेषु सौख्येषु स्त्रियः प्रधानं
सर्वेषु गात्रेषु शिरः प्रधानं ॥ १ ॥

॥ इति षष्ठं वैतालकथानकं ॥

---

॥ अथ चाणाक्यश्लोकाः ॥

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ १ ॥
पण्डिते च गुणाः सर्वे मूर्खे दोषाश्च केवलं ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥ २ ॥
मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ ३ ॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ४ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ ५ ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत्किञ्चिन्न भाषते ॥ ६ ॥

उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ७ ॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनं ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखं ॥ ८ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणं ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलं ॥ ९ ॥
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सः ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ १० ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ११ ॥
यस्मिन्देशे न सम्मानो न प्रीतिर्न च बान्धवाः ।
न चातिथ्यागमः कश्चित्तं देशं परिवर्जयेत् ॥ १२ ॥
दुर्लभं प्रकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः ।
दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ १३ ॥
कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रतां ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ १४ ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति चाध्रुवं नष्टमेव च ॥ १५ ॥
पुस्तकस्था च या विद्या परहस्तगतं धनं ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनं ॥ १६ ॥

पादपानां भयं वातः पद्मानां शिशिरो भयं ।
पर्वतानां भयं वज्रः साधूनां दुर्जनो भयं ॥ १७ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किं ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १८ ॥
बहुभिर्मूर्खसङ्घातैरन्योन्यपशुवृत्तिभिः ।
प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ १९ ॥
कुदेशमासाद्य कुतोऽर्थसञ्चयः ।
कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
कुगेहिनीं प्राप्य कुतो गृहे सुखं ।
कुशिष्यमध्यापयतः कुतो यशः ॥ २० ॥
॥ इति चाणक्यश्लोकाः ॥

---

॥ अथ मोहमुद्गरः ॥

मूढ जहीहि धनागमतृष्णां
कुरु तनुबुद्धे मनसि वितृष्णां ।
यल्लभसे निजकर्मोपात्तं
वित्तं तेन विनोदय चित्तं ॥ १ ॥
का तव कान्ता कस्ते पुत्रः
संसारोऽयमतीव विचित्रः ।
कस्य त्वं वा कुत आयात-

स्तत्त्वं चिन्तय तदिदं भ्रातः ॥ २ ॥
मा कुरु धनजनयौवनगर्वं
हरति निमेषात्कालः सर्वं ।
मायामयमिदमखिलं हित्वा
ब्रह्मपदं प्रविशाशु विदित्वा ॥ ३ ॥
नलिनीदलगतजललवतरलं
तद्वज्जीवनमतिशयचपलं ।
क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥ ४ ॥
यावज्जननं तावन्मरणं
तावज्जननीजठरे शयनं ।
इति संसारे स्फुटतरदोषः
कथमिह मानव तव सन्तोषः ॥ ५ ॥
दिनयामिन्यौ सायं प्रातः
शिशिरवसन्तौ पुनरायातः ।
कालः क्रीडति गच्छत्यायु-
स्तदपि न मुञ्चत्याशावायुः ॥ ६ ॥
अङ्गं गलितं पलितं मुण्डं
दन्तविहीनं जातं तुण्डं ।
करधृतकम्पितशोभितदण्डं

तदपि न मुञ्चत्याशाभाण्डं ॥ ७ ॥
सुरमन्दिरतरुमूलनिवासः
शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः
कस्य सुखं न करोति विरागः ॥ ८ ॥
शत्रौ मित्रे पुत्रे बन्धौ
मा कुरु यत्नं विग्रहसन्धौ ।
भव समचित्तः सर्वत्र त्वं
वाञ्छस्यचिराद्यदि विष्णुत्वं ॥ ९ ॥
अष्टकुलाचलसप्तसमुद्रा
ब्रह्मपुरन्दरदिनकररुद्राः ।
न त्वं नाहं नायं लोक-
स्तदपि किमर्थं क्रियते शोकः ॥ १० ॥
त्वयि मयि चान्यत्रैको विष्णु-
र्व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वं पश्यात्मन्यात्मानं
सर्वत्रोत्सृज भेदज्ञानं ॥ ११ ॥
बालस्तावत्क्रीडासक्त-
स्तरुणस्तावत्तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः

परमे ब्रह्मणि को ऽपि न लग्नः ॥ १२ ॥
द्वादशपञ्जरिकाभिरशेषः
शिष्याणां कथितो ऽभ्युपदेशः ।
येषां नैष करोति विवेकं
तेषां कः कुरुतामतिरेकं ॥ १३ ॥

---

[अर्थमनर्थं भावय नित्यं
नास्ति ततः सुखलेशः सत्यं ।
पुत्रादपि धनभाजां भीतिः
सर्वत्रैषा विहिता रीतिः ॥ १४ ॥
यावद्वित्तोपार्जनशक्त-
स्तावन्निजपरिवारो रक्तः ।
तदनु च जरया जर्जरदेहे
वार्तां को ऽपि न पृच्छति गेहे ॥ १५ ॥
कामं क्रोधं लोभं मोहं
त्यक्त्वात्मानं पश्य हि को ऽहं ।
आत्मज्ञानविहीना मूढा-
स्ते पच्यन्ते नरकनिगूढाः ॥ १६ ॥
हरिचरणाम्बुजनिर्भरभक्तिः
संसाराद्चिराद्भवमुक्तिः

सेन्द्रियमानसवासादेवं
हृत्यसि निजहृदयादपि देवं ॥ १८ ॥ ]

॥ इति मोहमुद्गरः ॥

---

## ॥ अथ करुणाविलासः ॥

दैवे पराग्वदनशालिनि हन्त जाते
याते च सम्प्रति दिवं प्रति बन्धुरत्ने ।
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिं ॥ १ ॥

प्रत्युद्गता सविनयं सहसा पुरेव
स्मेरैः स्मरस्य सचिवैः सहसावलोकैः ।
मामद्य मञ्जुरचनैर्वचनैश्च बाले
हा लेशतोऽपि न कथं शिशिरीकरोषि ॥ २ ॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्यापि खेदकलिता विमुखी बभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥ ३ ॥

निर्वाणमङ्गलपदं त्वरया विशन्त्या
मुक्ता दयावति दयापि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभाते

नीलारविन्दमदभङ्गपदैः कटाक्षैः ॥ ४ ॥
धृत्वा पदस्खलनभीतिवशात्करं मे
यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्यां
आरोहसीति हृदयं शतधा प्रयाति ॥ ५ ॥
निर्दूषणा गुणवती रसभावपूर्णा
सालंकृतिः श्रवणमङ्गलवर्णराशिः ।
सा मामकीनकवितेव मनोऽभिरामा
रामा कदापि हृदयान्मम नापयाति ॥ ६ ॥
चिन्ता शशाम सकलापि सरोरुहाणां
इन्दोश्च बिम्बमसमां सुषमामयासीत् ।
अभ्युद्गतः कलकलः किल कोकिलानां
प्राणप्रिये यदवधित्वमितो गतासि ॥ ७ ॥
सौदामिनीविलसितप्रतिमानकाण्डे
दत्वा कियन्त्यपि दिनानि महेन्द्रभोगान् ।
मन्नोज्झितस्य नृपतेरिव राज्यलक्ष्मी-
र्भाग्यच्युतस्य करतो मम निर्गतासि ॥ ८ ॥
केनापि मे विलसितेन समुद्गतस्य
कोपस्य किं नु करभोरु वशंवदाभूः ।
यन्मां विहाय सहसैव पतिव्रतापि

यातासि मुक्तरमणीसदनं विदूरं ॥ ९ ॥
काव्यात्मना मनसि पर्यणमन्पुरा मे
पीयूषसारसरसास्तव ये विलासाः ।
तानन्तरेण रमणी रमणीयशीले
चेतोहरा सुकविता भविता कथं नः ॥ १० ॥
या तावकीनमधुरस्मितकान्तिकान्ते
भूमण्डले विफलतां कविषु व्यतानीत् ।
सा कातराक्षिविलयं त्वयि यातवत्यां
राकाधुना वहति वैभवमिन्दिरायाः ॥ ११ ॥
मन्दस्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिशं समीडे ।
सा नित्यमङ्गलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति ॥ १२ ॥
भूमौ स्थिता रमणनाथ मनोहरेति
सम्बोधनैर्यमधिरोपितवत्यसि द्यां ।
स्वर्गं गता कथमिव क्षिपसि त्वमेण-
शावाक्षि तं धरणिधूलिषु मामिदानीं ॥ १३ ॥
लावण्यमुज्ज्वलमपास्ततुलं च शीलं
लोकोत्तरं विनयमर्थमयं मयं च ।
एतान्गुणानशरणानथ मां च हित्वा

हा हन्त सुन्दरि कथं त्रिदिवं गतासि ॥ १४ ॥
कान्त्या सुवर्णवरया परया च शुद्ध्या
नित्यं स्विकाः खलु शिखाः परितः क्षिपन्तीं ।
चेतोहरामपि कुशेशयलोचने त्वां
जानामि कोपकलुषो दहनो ददाह ॥ १५ ॥
कर्पूरवर्तिरिव लोचनतापहन्त्री
फुल्लाम्बुजस्रगिव कण्ठसुखैकहेतुः ।
चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥ १६ ॥
स्वप्नान्तरेऽपि खलु भामिनि पत्युरन्यं
या दृष्टवत्यसि न कञ्चन साभिलाषं ।
सा सम्प्रति प्रचलितासि गुणैर्विहीनं
प्राप्तुं कथं कथय हन्त परं पुमांसं ॥ १७ ॥
[दयितस्य गुणाननुस्मरन्ती
शयने सम्प्रति या विलोकितासीत् ।
अधुना किल हन्त सा कृशाङ्गी
गिरमङ्गीकुरुते न भाषितापि ॥ १८ ॥]
रीतिं गिराममृतवृष्टिकिरां तदीयां
तां चाकृतिं कविवरैरभिनन्दनीयां ।
लोकोत्तरामथ कृतिं च सुधारसार्द्रां

स्तोतुं न कस्य समुदेति मनःप्रसादः ॥ ११ ॥

॥ इति श्रीमत्पण्डितराजजगन्नाथविरचिते
भामिनीविलासे करुणाविलासः ॥

---

॥ अथ भामिनीविलासे प्रास्ताविकाः श्लोकाः ॥

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ १ ॥
पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २ ॥
समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ ५ ॥
तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ६ ॥
कमलिनि मलिनीकरोषि चेतः
किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते
जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ७ ॥

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ १२ ॥
गुञ्जति मञ्जु मिलिन्दे मा मालति मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ १८ ॥
एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः ।
साजात्यशङ्कयामी न त्वां निघ्नन्ति निर्दयाः काकाः ॥ २३ ॥
कलभ तवान्तिकमागतमलिमेतं मा कदाप्यवज्ञासीः ।
अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ २५ ॥
मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला
वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।
एकः किन्तु मनागयं जनयति स्वान्ते ममाधिज्वरं
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ ३२ ॥
नोपेक्षा न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः ।
तथापि हरते तापं लोकानामुन्नतो घनः ॥ ३७ ॥
समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं
विलासः पद्मायाः सुरहृदयहारी परिमलः ।
गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव
द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियं ॥ ३८ ॥
किं खलु रत्नैरेतैः किं पुनरभ्रापितेन वपुषा ते [४० ॥
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानां ॥

*

न वारयामो भवतीं विशन्तीं
वर्षानदि स्रोतसि जह्नुजायाः ।
न युक्तमेतत्तु पुरो यदस्या-
स्तरङ्गभङ्गान्प्रकटीकरोषि ॥ ४३ ॥
भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥ ४५ ॥
गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत न कदापि सञ्चरेः ।
यदि बुध्यते हरिशिशुः स्तनन्धयो
भविता करेणुपरिशेषिता मही ॥ ५२ ॥
लीलामुकुलितनयनं किं सुखशयनं समातनुषे ।
परिणामविषमहरिणा करिणायक वर्धते वैरं ॥ ६२ ॥
विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ ६३ ॥
वहति विषधरान्पटीरजन्मा
शिरसि मसीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं
पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ ७३ ॥

युक्तं सभायां खलु मर्कटानां
शाखास्तरूणां मृदुलालनानि ।
सुभाषितं चीत्कृतिरातिथेयी
दन्तैर्नखाग्रैश्च विपाटनानि ॥ ८० ॥
धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च ।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥ ८१ ॥
गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डं ।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ १२ ॥
व्योमनि शम्बाकुरुते चित्रं निर्माति यत्नतः सलिले ।
स्नपयति पवनं सलिलैर्यस्तु खले चरति सत्कारं ॥ १३ ॥
हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।
लेढि जिघ्रति सङ्क्षिप्य करोत्युन्नतमाननं ॥ १४ ॥
धूमायिता दशदिशो दलितारविन्दा
देहं दहन्ति दहना इव गन्धवाहाः ।
त्वामन्तरेण मृदुताम्रदलाम्रमञ्जु-
गुञ्जन्मधुव्रत मधो किल कोकिलस्य ॥ ११ ॥
॥ इति भामिनीविलासे प्रास्ताविकाः श्लोकाः ॥ ॥

---

## ॥ अथ काव्यराक्षसं सटीकं ॥

कश्चिद्वनं बहुवनं विचरन्वयःस्थो
वश्यां वनात्मवदनां वनितां वनार्द्रां ।
तर्वर्यरिप्रदमुदीक्ष्य समुत्थितं खे
ना गामिमां मदकलः सकलां बभाषे ॥ १ ॥

॥ टीका ॥ श्रीगणेशाय नमः ॥ कश्चिदिति । कश्चिदनिर्दिष्टनामा पुरुषः । वनं काननं । बहुतरं [तं] वनमुदकं यत्र तद् बहुवनं । विचरन् भ्रमन् । वयःस्थो वयःस्थितो युवा । वश्यां भार्यां । किंविशिष्टां । वनात्मवदनां । वनं पानीयं । तदात्मा यस्य स चन्द्रमाः । तेन तुल्यं वदनं यस्याः सा वनात्मवदना तां । चन्द्रवदनामित्यर्थः । वनितां स्त्रियं । वनार्द्रां पानीयेनार्द्रामुक्षितां । तर्वर्यरिप्रदं मेघं । तरवो वृक्षाः । तेषामरिरग्निः । तर्वर्यरिस्तस्याप्यरिरुदकं तत्प्रददातीति तर्वर्यरिप्रदो मेघस्तं । उदीक्ष्य दृष्ट्वा । समुत्थितं समुत्पन्नं । खे आकाशे । ना पुरुषः । मदकलो हर्षविभ्रमः । गां वाचं । (सकलां) समस्तां । बभाषे उक्तवान् ॥ १ ॥

पश्याब्जदृग्गिरितटेषु कुमातृसाह्वा-
न्भूदेवराजरिपुशत्रुसमावधूतान् ।
वैश्वानरारिजरिपुघ्नशराभिभूतै-
र्दृक्श्रोत्रशत्रुभिरुपासितपुष्पशोभान् ॥ २ ॥

पश्याब्जदृगिति । हे अब्जदृक् पद्मलोचने । गिरितटेषु पर्वतान्तेषु । (कुमाता) कुत्सिता अम्बा । तत्समाना आह्वा येषां तान् । कदम्बानित्यर्थः । भूदेवा ब्राह्मणाः । तेषां राजा सोमः । तस्य रिपुर्मेघः । तस्य शत्रुर्वातः । तेनावधूतान् कम्पितानित्यर्थः । वैश्वानरोऽग्निः । तस्यारिरुदकं । तत्र जातो मत्स्यः । तद्रिपुः कैवर्तः । तस्य घातकः कामः । तस्य शरैरभिभूतैः । दृक्श्रोत्रशत्रुभिर्मयूरैः । (उपासित॰) सेवितपुष्पशोभान् ॥ २ ॥

पश्याद्रिसारसदृशीभिरमूभिरद्भि-
राप्लावयत्यमरगुब्धरणीमहिघ्नः ।

अब्दः सिताभिरसितः शबलः खगाभि-
र्वार्जैः सितैरिव विभाति वनं प्रबुद्धैः ॥ ३ ॥

पश्याद्रीति । पर्वतसारतुल्याभिः । अमूभिः प्रत्यक्षाभिः । अद्भिस्तोयैः । आप्लावयति धरणीं । अमरगुप् शक्रः । अहिं वृत्रं हतवानहिघ्नः । अब्दो मेघः । सिताभिः शुक्लाभिः । (खगाभिः) आकाशगाभिर्बलाकाभिः । असितः कृष्णाः । शबलश्चित्रः । वार्जैः कुमुदैः सितैः । वनं पानीयं । यथा विभाति विकसितैस्तथायं विभाति ॥ ३ ॥

गोष्ठं घृतं सुघृतवाड्भिरमूभिरग्र्यं
गोभिः समुद्धरति यद्बहुधा हिमघ्नः ।
तद्गव्यमम्बरगतं शिखिजात्मसंस्थं
विष्यन्दमानमभिवर्धयतीह गोजान् ॥ ४ ॥

गोष्ठं घृतमिति । गवि तिष्ठतीति गोष्ठं । घृतं पानीयं । सुष्ठु घृतं वहन्तीति सुघृतवाहा रश्मयः । ताभिरग्रे भवमग्र्यं । गोभिः रश्मिभिः । समुद्धरति आकर्षति । बहुधा बहुप्रकारं । हिमघ्नो रविः । गोषु रश्मिषु भवं गव्यं नीरं । अम्बरगतमाकाशगतं । शिखी वह्निः । तज्जो धूमः । स आत्मा यस्य स मेघः । तत्रस्थं शिखिजात्मस्थं तद् घृतं विष्यन्दमानं । इह भूतले । गोजान् तृणादीन् । अभिवर्धयतीति [illegible] ॥ ४ ॥

अब्रूपलाशनिभदृग्घनजात्मवक्त्रा
चार्वस्वरेभनिभगा गजदोःसमोरुः ।
सीरिध्वजप्रसवतुल्यविषाणदासौ
आ सङ्गता प्रमुदिता प्रसमीक्ष्य वार्द ॥ ५ ॥

अब्रूपलाशेति । अब्रूपलाशनिभदृक् । अप्सु रोहतीति अब्रू कमलं । घनजात्मवदना चन्द्रवदना । घने जातमुदकं घनजं । चार्वस्वरा हंसस्वरा । इभेन निभं गमनं यस्याः सा इभनिभगा । गजदोःसमोरुः इभकरसमानोरुः । सीरिध्वजप्रसवतुल्यविषाणदासौ । सीरी बलभद्रः । तस्य ध्वजस्तालः । तत्प्रसवानि

फलानि । तत्तुल्यौ विषाढ्यौ क्षीरदौ स्तनौ यस्याः सा । न्रा सङ्गता पुरुषेण सङ्गता । प्रमुदिता प्रहृष्टा । प्रसमीक्ष्य दृष्ट्वा । वार्दं मेघं । इति पश्य ॥ ५ ॥

सूर्यांशुनामपतिरुन्नतदृक्प्रगामी
वाग्नामभिः परिवृतो विषनामदाभिः ।
उक्षा वरः प्रमुदितः प्रतिनानदीति
गर्जन्तमीक्षणाहितोच्चयतुल्यरूपं ॥ ६ ॥

सूर्यांशुरिति । सूर्यांशवो रश्मयः । तन्नाम विद्यते यासां ताः सूर्यांशुनामानः । तासां पतिर्वृषभः । उन्नतदृक्प्रगामी अधोदृशं गच्छतीति । वाचो नाम विद्यते यासां ताभिर्गोभिः परिवृतो विषनामदाभिः क्षीरदाभिः । विषं पानीयं तस्य नाम विद्यते यस्य तत्क्षीरं । उक्षा वरो वृषभः । प्रमुदितः प्रहृष्टः । प्रतिनानदीति प्रतिस्पर्धया नदति । गर्जन्तं मेघं । ईक्षणाहितोच्चयतुल्यरूपं । ईक्षणानि नेत्राणि । तेभ्यो हितमञ्जनं । तेन उच्चयो यस्य स अञ्जनपर्वतः । तत्तुल्यं रूपं यस्य तं । पश्येति सम्बन्धः ॥ ६ ॥

एनं पयोदपतिमुन्नमितं पयोदं
खस्थं महीतलगतः प्रतिगर्जतीव ।
भित्वावनिं वनरुहाक्षि शिरोरुहाभ्यां
सम्प्रस्थितोऽमृतधरैरभिषिच्यमानः ॥ ७ ॥

एनमिति । हे वनरुहाक्षि कमललोचने । एनं पयोदपतिं पश्येति सम्बन्धः । पयोदाः क्षीरदाः गावः । तासां पतिं वृषभं । किंविशिष्टं । पयोदमुदकदं मेघं प्रतिगर्जतीव । महीतलगतः भूस्थः । उन्नमितमवलम्बमानं । खस्थमाकाशस्थं । किं कृत्वा । भित्वा विदार्य । अवनिं पृथ्वीं । काभ्यां शिरोरुहाभ्यां शृङ्गाभ्यां । (सम्प्रस्थितः) स पथि स्थितः प्रवृत्तः । अभिषिच्यमानः कैः । अमृतधरैर्मेघैः । अमृतमुदकं ॥ ७ ॥

रेतोजविद्रुतजभूधरधातुरूपाः
खस्थाः पयोदजलदक्शुचिशुक्रमासे ।

मासोर्नभस्यनभसोरतिसम्पदन्ता-
स्तीव्रं विषं विषधराः प्रतिनिर्वपन्ति ॥ ८ ॥

रेतोजविजततेति । रेतसि जातं रेतोजं सुवर्णं । विजताज्जातं विजतजं रुधिरं । भूधराः पर्वताः । तेषां धातवो भूधरधातवः सुवर्णरौप्यादयः । तैस्तुल्यं रूपं येषां ते रेतोजविजतजभूधरधातुरूपाः । हे पयोदजलदृक् कमललोचने । शुचिशुक्रमासे ज्येष्ठाषाढमासे । नभस्यनभसोर्भाद्रपदश्रावणयोः । (अतिसम्पदन्ताः) अतिसम्पाततः सम्पन्निमन्तः । तीव्रमसह्यं । विषमुदकं । विषधरा मेघाः । प्रतिनिर्वपन्ति प्रतिक्षिपन्तीत्यर्थः ॥ ८ ॥

स्वयोनिभन्नधजसम्भवानां
श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोऽरिबिम्बप्रतिबिम्बधारी
आरौति कान्ते पवनाशनाशः ॥ ९ ॥

स्वयोनिभक्षेति । स्वजन्मनिभक्षो वह्निः । तस्य ध्वजो धूमः । तज्जा मेघाः । तेषां निनादं श्रुत्वा आकर्ण्य । (गिरि°) गुहासु स्थितः सन् । तमोऽरिश्चन्द्रमाः । (बिम्ब°) तद्रूपप्रतिबिम्बधारी । (आरौ°) अतिनदति पवनाशनाशो मयूरः । हे कान्ते पश्येति सम्बन्धः ॥ ९ ॥

गोष्ठश्च कुंकुमवपुः प्रतिराजते ऽसौ
सप्ताद्रिदैत्यभुजगोत्तमशत्रुगोपः ।
उर्वीधराभमचिरोत्थितमब्धरं खे
दृष्ट्वाह्निका प्रमुदितो ह्निमकाह्वयानः ॥ १० ॥

गोष्ठश्चेति । गवि भूमौ तिष्ठतीति गोष्ठः । कुंकुमेन सदृशं वपुर्यस्य सः । कुंकुमवपुः । को ऽसौ इन्द्रगोपः प्रतिराजते शोभते । असाविति प्रत्यक्षः । सप्त अद्रयः पर्वताः । दैत्या असुराः । भुजगोत्तमाः सर्पाः । तेषां शत्रुरिन्द्रः । तं गोपयति रक्षति इति सप्ताद्रिदैत्यभुजगोत्तमशत्रुगोपः । उर्वीधरः पर्वतः । तद्वदाभा यस्य स उर्वीधराभस्तं । अचिरोत्थितमिदानीमेवोत्थितं । अपो धरतीति अब्धरो

मेघस्तं । खे आकाशे दृष्ट्वा । अहिः सर्पस्तं हन्तीत्यहिहा मयूरः । हिमहाह्वयानः शिखी मयूरः ॥ १० ॥

कृष्णोऽम्बरः क्षरति तोयमसावजस्र-
मन्याविमौ रणगताविव चेभराजौ ॥
अन्ये त्वमी द्विरदवृन्दनिभाः क्षरन्तः
प्रच्छादयन्त्यमरसिद्धविमानमार्गं ॥ ११ ॥

कृष्णोऽम्बर इति । कृष्णो नीलः । अम्बरो मेघः । क्षरति वर्षति । तोयं पानीयं । अजस्रं प्रभूतं । अन्याविमौ अपरावेतौ । इभा हस्तिनः । तेषां राजानौ । अन्योन्यं स्पर्धमानावित्यर्थः । अन्ये अपरे तु । द्विरदा हस्तिनः । तेषां वृन्दं । तेन निभाः सदृशाः । क्षरन्तो वर्षन्तः । प्रच्छादयन्ति कं । अमरसिद्धविमानमार्गं । आकाशमित्यर्थः ॥ ११ ॥

वार्दाः खगाः क्षितिधरागमनप्रकाशा
नेमीभरासभतुरङ्गमतुल्यघोषाः ।
वाय्वीरिताः खमवतत्य वनं क्षरन्तो
वार्भिः क्षितिं घृतधराः परिणिर्वपन्ति ॥ १२ ॥

वार्दा इति । वाः ददातीति वार्दा मेघाः । खे गच्छन्तीति खगाः । येषामागमने [क्षितिधराः] क्षितिधराणां प्रकाशस्ते क्षितिधरागमनप्रकाशाः । नेमी रथचक्रधारा । इभो हस्ती । रासभो गर्दभः । तुरङ्गमो ऽश्वः । तेषां तुल्यो घोषो ध्वनिर्येषां ते नेमीभरासभतुरङ्गमतुल्यघोषाः । वाय्वीरिता वायुना क्षिप्ताः । खमाकाशं । अवतत्य व्याप्य । वनमुदकं । क्षरन्तो वर्षन्तः । वार्भिः पानीयैः । क्षितिं पृथ्वीं । घृतं पानीयं । तद्धारयन्तीति घृतधराः । परिणिर्वपन्ति नयन्तीत्यर्थः ॥ १२ ॥

वृषोऽङ्घ्रिपाशनरिपुघ्नसुतारिसाङ्क-
मारुह्य तिष्ठति सुगात्रि भुजङ्गमारिः ।
यस्य स्वनैः प्रमुदितस्य ममाद्य बाले
तालध्वजावरजसूनुशराः पतन्ति ॥ १३ ॥

एषो ऽंह्रिपा इति । एष इत्यादि प्रत्यक्षनिर्देशः । अंह्रिपा वृक्षास्तानश्नातीति अंह्रिपाशनो ऽग्निः । तस्य रिपुः पानीयं । अंह्रिपाशनरिपुः । तं हन्तीति घ्नः आदित्यः । तस्य सुतः कर्णः । तस्य रिपुः अर्जुनः । तेन समाना आह्वा यस्य स अर्जुनवृक्षः । तमारुह्य तिष्ठति । शोभनं गात्रं यस्याः सा सुगात्री । तस्यामन्त्रणं सुगात्रि । भुजङ्गमाः सर्पाः । तेषामरिः भुजङ्गारिः मयूरः । कथं भूतः । यस्य स्वनैः शब्दैः प्रकृष्टस्य मम । अद्य अस्मिन्नहनि । बाले प्रिये । तालध्वजो बलभद्रः । तस्यावरजो ऽनुजो विष्णुः । तत्सूनुः मदनः । तस्य शराः पतन्ति व्यथयन्तीत्यर्थः ॥ १३ ॥

उस्राविषं स्थलगतो ऽत्ति तथैव***
वार्भ्यो द्विजो हरिदृगेष दशार्द्धगूढः ।
वाताशनः खशयनं स्मरति स्थलस्य
चक्षुःश्रवा वनभयात्सुरशत्रुनामा ॥ १४ ॥

उस्राविषमिति । उस्रा गावस्तासां विषं गोमयं । अत्ति भक्षयति यथा स्थलगतः कीटः । तथा अवतीर्णः । वार्भ्यः पानीयेभ्यः । अत्ति खादति । को ऽसौ । द्विजः कच्छपः । हरिर्वानरः । तेन तुल्या दृग्यस्य स भवति हरिदृक् । एष इति प्रत्यक्षनिर्देशः । दशार्द्धनिगूढः पञ्चभिः कच्छपैर्गूढ इत्यर्थः । वाताशनः सर्पः । खशयनः विलशयनः । स्मरति ध्यायति । चक्षुःश्रवाः सर्पः । वनं पानीयं । तस्माद्भयं । सुरशत्रुनामा सर्पविशेष इत्यर्थः ॥ १४ ॥

ना विष्किरावणमुपेत्य कुमातृसाह्व-
माक्रीडते मधुकलो ऽङ्गनया समेतः ।
अन्यस्त्वयं मणिवराभमुपेत्य गोजं
ना रामया सह पयःपतिजां वृणोति ॥ १६ ॥

ना विष्किरावणमिति । ना पुरुषः । उपेत्य प्राप्य । विष्किराः पक्षिणः । तेषां वनं विष्किरावणं । किंसंज्ञकं । कुमातृसाह्वं कदम्बवनमित्यर्थः । आक्रीडते मधुकलः । मध्येन विराजमान इत्यर्थः । अन्यो ऽपरः । मणिवर इन्द्रनीलः । तेन तुल्या आभा यस्य तन्मणिवराभं । दूर्वाशाद्वलमित्यर्थः । उपेत्य प्राप्य । गोजं । गौः पृथ्वी । तस्यां जातं समुद्भूतं । ना पुरुषः । रामा स्त्री । तया सह । पयःपतिः समुद्रः । पयःपतौ जाता तां । वृणीते सम्भुनक्ति ॥ १६ ॥

*

सूतं महत्क्षतजवर्णनिभं नरोऽसौ
बिभ्रत्यमूनि च भिनत्ति सरोरुहाणि ।
तज्जेन चापि रजसा वनितां वयःस्थो
ऽप्यभ्युद्धरत्यवकिरत्यभिषिच्यमानः ॥ १७ ॥

सूतमिति । सूतं वस्त्रमुच्यते । किंविशिष्टं । महत्क्षतजं रुधिरं तस्य वर्णस्तेन निभा तुल्या आभा यस्य तत्तथा । नरोऽसौ बिभर्ति अमूनि च भिनत्ति सरोरुहाणि । चशब्दः पादपूरणे । अमूनि एतानि भिनत्ति । उच्चिनोति कमलानि । तेषु जातं तज्जं । तज्जेन रजसा पद्मरेणुना । वनितां स्त्रियं । वयःस्थो युवा । किं करोतीत्याह । अभ्युद्धरति मुद्गयतीत्यर्थः । अवकिरति विक्षिपतीत्यर्थः ॥ अभिषिच्यमानः कया । वनितया । क्रीडारसेन पानीयेन । अर्थवशाद्विभक्तिपरिणामः ॥१७॥

पङ्के निमग्नमिभवृन्दमदः सवारि
गर्जत्तिमिक्षयदवृन्दमिवावभाति ।
वार्यात्मनामशतचित्रतनुः सुपर्णी
योषिद्वृतः समदनः प्रतिरोरवीति ॥ १८ ॥

पङ्के निमग्नमिति । पङ्कः कर्दमः । तस्मिन्निमग्नं । इभवृन्दं हस्तियूथं । अदः एतत् । सवारि तेव सवारि गर्जः बृंहन् । तिमिक्षयदवृन्दमिवावभाति । तिमिर्मत्स्यः । तस्य क्षयो वासः गृहमिति यावत्तद्ददन्तीति तिमिक्षयदा मेघाः । तेषां वृन्दं समूहं । विभाति शोभते । कृष्णतादिसाधर्म्यात् । वार्यात्मा चन्द्रमाः । तस्य नामशतेन चित्रं । विचित्रतनुर्यस्य स वार्यात्मनामशतचित्रतनुः । सुपर्णी शोभनानि पर्णानि पत्त्राणि यस्य स मयूर इत्यर्थः । योषिद्वृतः मयूरीसहितः । समदनः मदनेन सह वर्तमानः । कामाविष्ट इत्यर्थः ॥ १८ ॥

विस्फोटिनाम्बररवेण रिरंसुरेष
सन्त्रासितो हरिरनोकहनिष्कुटस्थः ।
संलीयते नडितमप्यभिवीक्ष्य विप्रः
खातवं महत्तरमसौ समनुप्रविष्टः ॥ १९ ॥

विस्फोटिनेति । विस्फोटिना अम्बररवेण विसर्पितगलंदन्नेन । रिंसुरेणाऽनु- कामः । सन्त्रासितस्त्रालितः । हरिर्वानरः । अनोकहनिष्कुटस्थः संलीयते । तडितं विद्युतं । अभिवीक्ष्य दृष्ट्वा खिन्नः । सात्मं विलाद्विलं । महन्तरमतिमहत् । असौ प्रत्यक्षः । समनुप्रविष्टः दूरं प्रविष्ट इत्यर्थः ॥ १९ ॥

एतावदुक्तमवचः सुमनाः समुक्त्वा
रन्त्वा दिनं सह तया प्रियया ह्यदीनः ।
युक्तं चतुर्भिरनडुद्भिरदीनवाड्भि-
रारुह्य यानमथ सम्प्रययौ स्वगेहं ॥ २० ॥

॥ इति श्रीमहाकविना मलयदेशजन्मना रविदेवेन वि- रचितं काव्यराक्षसं विंशतिहृद्यपद्यसमेतं समाप्तं ॥

एतावदिति । एतावद्यथोक्तमुत्तमवचः प्रकृष्टं वचनं । शोभनं मनो यस्य (स) भवति सुमनाः । समुक्त्वा अभिधाय । रन्त्वा क्रीडित्वा । दिनं दिवसं । तया सार्द्धं । प्रियया भार्यया सार्द्धं । हि पादपूरणे । अव्ययप्रान्ते । अदीनः न दीनः । अदीनः प्रकृष्टः । युक्तं चतुर्भिरनडुद्भिर्बलीवर्द्दैः । कथं भूतैः । अदीनवाड्भिः । अदीनं वहन्तीति अदीनवाहः । तैः अदीनवाड्भिः । अथानन्तरं । पुनर्गो गेहं मन्दिरं । सम्प्रययौ अयात इत्यर्थः ॥ २० ॥

॥ इति श्रीमहाकविना श्रीरविदेवेन रचिता सज्जनमनआनन्ददायिनी काव्यराक्षसटीका समाप्ता ॥

---

## ॥ अथ भवान्यष्टकं ॥

॥ श्रीगणेशाय नमः ॥

न तातो न माता न बन्धुर्न दाता
न पुत्रो न पुत्री न भृत्यो न भर्ता ।
न जाया न वित्तं न वृत्तिर्ममैव
गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥ १ ॥

न जानामि दानं न च ध्यानमानं
न जानामि मन्त्रं न च स्तोत्रयन्त्रं ।
न जानामि पूजां न च न्यासजालं
गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥ २ ॥
भवाब्धावपारे महादुःखभीते
प्रयातः प्रकर्माप्रलोभी प्रमत्तः ।
कुमायः कुरूपः कुबुद्धिः सदाहं गतिस्त्वं० ॥ ३ ॥
न जानामि तीर्थं न जानामि पुण्यं
न जानामि मुक्त्यालयं वा किमेतत् ।
न जानामि भक्तिं वृतिं चापि मात- गतिस्त्वं० ॥ ४ ॥
कुकर्मा कुसङ्गी कुबुद्धिः कुदासः
कुलाचारहीनः कदाचारलीनः ।
कुदृष्टिः कुवाक्यः सदाहं भवामि गतिस्त्वं० ॥ ५ ॥
प्रजेशं रमेशं महेशं सुरेशं
गणेशं दिनेशं निशे **** ।
न जानामि चान्यच्छरण्यं सदाहं गतिस्त्वं० ॥ ६ ॥
विवादे विषादे प्रवादे प्रवासे
जले वानले पर्वते शत्रुमध्ये ।
अरण्ये शरण्ये सदा मां प्रयाहि गतिस्त्वं० ॥ ७ ॥
अनाथो दरिद्रो ज्वरारोगयुक्तो

महार्णीणादीनः सदा जाड्यवक्त्रः ।
विपत्तिं प्रविष्टः शरण्यं सदाहं गतिस्त्वं० ॥ ८ ॥

य इह पठति भक्त्या स्तोत्रमेतत्समग्रं
स भवति नृपपूज्यो माननीयो नृपाणां ।
बहुकुलजनभर्ता भुक्तभोगी कवीन्द्रः
सकलभुवनमातस्त्राहि मां भो नमस्ते ॥
॥ इति श्रीशङ्कराचार्यविरचितं भवान्यष्टकं समाप्तं ॥

॥ अथ भर्तृहरिश्लोकाः ॥

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रं ।
वस्त्रं च जीर्णशतखण्डमयी च कन्था
हाहा तथापि विषयान्न परित्यजन्ति ॥ २ ॥
यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिशारैः ॥ ३ ॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते

जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनां ॥ ४ ॥
व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रं ॥ ५ ॥
वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः ।
इदानीमेते स्म प्रतिदिवसमापन्नपतना
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ६ ॥
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव बलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीयवनिकां ॥ ७ ॥
आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगेश्वराः ॥ ८ ॥

॥ इति भर्तृहरिश्लोकाः ॥

---

॥ इत्ययं ग्रन्थः समाप्तः ॥

---

## Druckfehler und Berichtigungen.

---

S. 2, 16 lies ऽधो für ऽधः. 4, 7 गा für गावो. 6, 16 ist der erste । zu streichen. 8, 15 मैथिल्या für °यास्. 9, 2 streiche हि. 15, 17 lies °योगेपा und 25, 107 fl. गगपा°. 34, 8-9 verbinde देवामनुष्याः. 38, 15 lies अतिप्रमा° für अप्रतिमा°. Ueber 40, 7 u. 45, 9 s. d. Anm. — 42, 19 verbinde समितिश्रो°. 43, 8 für सुतः besser श्रुतः. 54, 15 त्यज्यतां für °ज्ञतां. 85, 89 नमो für मनो. 87, 4 schol. सुष्ठु und ताभिः । अग्रे. 21, 69. 36, 18. 62, 240. 71, 1. 93, 1 sind die mehr oder minder beschädigten Vocale nachzubessern. Anderes wird in den Anmerkungen besprochen, welche auch neue Rezensionen des S. 33-35 vorläufig aus der ed. calic. abgedruckten Hymnus und die Scholien dazu, sowie den hauptsächlichsten kritischen Apparat enthalten werden.

---

Greifswald, gedruckt bei F. W. Kunike.

## Zur Nachricht.

Vorliegendes Werk ist dazu bestimmt, beim Unterrichte im Sanskrit als **ein Handbuch** für den ersten und zweiten Cursus zu dienen und dem Uebelstande abzuhelfen, der den Lernenden bisher zwang, gleich beim ersten Anfange zwei oder drei meist sehr theure Bücher zur Hand zu nehmen. — Die zweite Abtheilung, welche, 10 bis 12 Bogen stark, Abriss der Grammatik, Wörterbuch u. s. w. enthalten wird, soll wo möglich zu Ostern 1850 erscheinen und das Ganze verhältnismässig sehr billig geliefert werden. Inzwischen übergebe ich den seit acht Monaten fertigen, aber durch unglückliche Verhältnisse mancher Art zurückgehaltenen Text, Dank der Bereitwilligkeit des jetzigen Herrn Verlegers, so wie er ist, Bekanntes und Neues, Leichtes und Schweres enthaltend, und ohne weitere Beigabe als ein kleines Druckfehlerverzeichnis, schon jetzt der nachsichtigen Beurtheilung der Kenner, indem ich mir vorbehalte, die nöthigen Nachweisungen und Erklärungen oder Rechtfertigungen und Berichtigungen nebst dem kritischen Apparate in den Anmerkungen nachzuliefern.

Da Bücher dieser Art nicht ohne mannigfache Opfer Seitens des Verfassers wie des Verlegers zu entstehen pflegen, ist es wohl nicht zu unbescheiden, wenn ich diejenigen, die es angeht, freundlich ersuche, für die Verbreitung dieses Werkes thätig mitzuwirken.

Greifswald, im October 1849.

**A. Hoefer.**

*Greifswald, gedruckt bei F. W. Kunike.*

